॥ अथश्राद्धविवेकः प्रारभ्यते ॥

॥श्रीगणेशायनमः॥ प्रसीदतुसनोहरिस्त्रिदशवैरिसीमंतिनीनवीनविधवाजनव्रतविधानदीक्षागुरुः॥ यदीयपदपंकजस्मरणवीतसर्वैनसः पुनर्भवगतागतं जहतिवीतमोहाबुधाः॥ १॥ चिरंतनानेकनिबंधसिद्धः सुसंप्रदायानुगतः स्फुटार्थः॥ नत्वाहरिं रुद्रधरेणसम्यग्वितन्यते श्राद्धविवेकएषः॥ २॥ श्राद्धंनामवेदबोधितपात्रालंभनपूर्वकप्रमीतदेवतोद्देशकोद्रव्यत्यागविशेषः॥ तच्छ्राद्धमिहस्वरूपभेदेतिकर्तव्यताकथनमंत्रनिर्णयविहितनिषिद्धदेशकालद्रव्यब्राह्मणादिकथनेनविविच्यते तत्रादौसंक्षेपतः स्वरूपभेदः कथ्यते तत्रबृहस्पतिः नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धंतथैवच पार्वणंचेतिमनुनाश्राद्धंपञ्चविधंस्मृतम् एतद्विवृत्तंभविष्यत्पुराणे अहन्यहनियच्छ्राद्धंतन्नित्यमितिकीर्तितं वैश्वदेवविहीनंतदशक्तावुदकेनतु एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यते तदप्यदैवंकर्तव्यमयुग्मान्भोजयेद्द्विजान् कामायविहितंकाम्यमभिप्रेतार्थसिद्धये॥ पार्वणेनविधानेनतदप्युक्तंखगाधिप वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते सर्वंप्रदक्षिणंकार्यंपूर्वाह्णेतूपवीतिना अमावास्यायांयत्क्रियतेतत्पार्वणमुदाहृतं क्रियतेवापर्वणियत्तत्पार्वणमितिस्थितिः अत्रनैमित्तिकपदेनषोडशप्रेतश्राद्धान्यपिसंगृह्यंते एकोद्दिष्टरूपत्वात्तेषां पार्वणपदेनगोष्ठीश्राद्धाद्यपिस्मृत्यंतरेणोक्तंसंगृह्यंते तेषांसर्वेषांपार्वणविधिनाविधानात् अन्यद्यपिपर्वणिभवंपार्वणमितिव्युत्पत्तिस्तथापिव्युत्पत्तिमात्रमिदंसिद्धम् वस्तुतोदेवश्राद्धपूर्वकषट्पुरुषश्राद्धंपार्वणं अतएवस्मृत्याहे पार्वणंकुर्वन्नधोधोयातिमानवः यतिश्राद्धंनिषिद्धम् अहन्येकादशेप्राप्तेपार्वणंतुविधीयत इत्यादिस्मृतिषु देवश्राद्धपूर्वकषट्पुरुषश्राद्धविषयतयैवनिषेधोविधिश्चोपपद्यते॥

अन्यथापर्वव्यतिरिक्तकालेपार्वणस्यासंभवाद्विधिनिषेधानुपपत्तिः स्मृतिसारमहार्णवहलायुधकल्पतरुपितृभक्तिषुस्मृति।
निबंधेष्वपिऔरसक्षेत्रजाभ्यांसाग्निकाभ्यांमृताहेपार्वणंकर्तव्यमितिपल्लिखितंतदपिसंगच्छते अन्यथातद्वचनमसंभवा
दयुक्तमेवस्यात् लोकेपिचप्रामाणिकास्त्वपरपक्षीयप्रतिपदादिश्राद्धेष्वपिपार्वणपदंप्रयुंजते श्राद्धारंभेप्रथमंश्राद्धीयद्र
व्यसेकः तत्रनाप्रोक्षितंस्पृशेत्किंचिच्छ्राद्धेदैवेचकर्मणीत्यत्रनस्पृशेन्नदद्यादित्यर्थः अनेनवाक्येनप्रोक्षणप्राप्तौतत्र
पुंडरीकाक्षोच्चारणेनेति क्वचिन्निबंधेलिखितं पुंडरीकाक्षस्मरणेनेतिक्वचित् तत्र शंखचक्रधरंविष्णुंद्विभुजंपीतवाससं
प्रारंभेकर्मणांविप्रपुंडरीकंस्मरेद्धरिमितिमूलवाक्यं तत्रस्मरणमेवविहितमस्तितथाप्युच्चारणस्यस्मरणपूर्वकतया उ
च्चारणेस्मरणमायात्येवेत्यविरोधएवेत्याचारानुगृहीतमुच्चारणंक्रियते तत्राविरुद्धफलकीर्तनमपिक्रियतेऽस्मत्संप्रदाये
तेनपुंडरीकाक्षः पुनात्वित्युच्चार्य्यद्रव्यसेकः ततःसंकल्पः तत्राऽद्यपार्वणश्राद्धमहंकरिष्य इतिपितृभक्तौसंकल्पः॥
अस्मत्संप्रदायेतुतिथ्युल्लेखपूर्वकः पित्रादीनांप्रत्येकंगोत्रसंबंधिपदानामनुकीर्तनपूर्वकः संकल्पःक्रियते तत्रनाम
गोत्राद्युच्चारणपूर्वकःसंकल्पइतियुक्तःपक्षः तथाहिनांदीमुखेविवाहेचप्रपितामहपूर्वकं वाक्यमुच्चारयेत्प्राज्ञोअन्य
त्रपितृपूर्वकमित्यनेनानुपूर्वीविशेषस्यकथनात् सामान्यतःपित्राद्यानुपूर्वीप्राप्यतेसानियम्यते अतआनुपूर्व्याउ
च्चारणंप्राप्तं गरुडपुराणादौश्राद्धप्रयोगलेखनेपित्राद्युच्चारणवाक्यंस्फुटमेव तत्तत्तिथिविशेषादेः श्राद्धप्रयोजकत
यादेशकालोत्कीर्तनमपियुज्यते तथाचाद्यामुकमासीयामावास्यायाममुकगोत्राणांपितृपितामहप्रपितामहानाममु

कामुकशर्मणाममुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांपार्वणश्राद्धमहंकरिष्ये इत्ये
वंसंकल्पःकर्तव्यः अतएवपितृभक्तावेकोद्दिष्टश्राद्धेनित्यश्राद्धेचास्मच्छिरिखितक्रमेणैवसंकल्य वाक्यं लिखितं ततोगा
यत्रीजपः तत्रोपविश्यजपेद्धीमान् गायत्रींतदनुज्ञयेति यद्यपिवारसंख्यानप्रतीयते तथापिस्नानांतरीयगायत्रीज
पादौप्रायशोवारत्रयाभिधानेनात्रापिवारसंख्याकांक्षायांसैवोपतिष्ठतइति प्रामाणिकाचारोपष्टंभेनवारत्रयंजपः
जपेचविशेषः केचित्प्रणवव्याहृतिरहितांशुद्धामेवगायत्रींजपंति केचित्प्रणवव्याहृतिपूर्वांजपंति तत्रद्विती
यःपक्षोयुक्तः तथाहि प्रणवःपूर्वमुच्चार्योभूर्भुवःस्व स्ततःपरं गायत्रीप्रणवश्चांतेजप्यएवमुदाहृतमिति योगि
याज्ञवल्क्यवाक्येनगायत्रीजपविधानेसर्वत्रप्रणवव्याहृतिपूर्वकतयाव्यवस्थापितत्वात् नचान्नोत्सर्गानंतरंसप्र
णवांसव्याहृतिकांगायत्रींजपेदितिकात्यायनसूत्रेप्रणवव्याहृतिसाहित्याभिधानादन्यत्रतयोःसाहित्यंपर्यवस्यती
तिवाच्यम् वाक्ययोर्भिन्नवक्तृकत्वात् तथाहि प्रथमंगायत्रीजपविधायकंब्रह्मपुराणवाक्यं द्वितीयंजपविधायकं
कात्यायनसूत्रम् एकवक्तृकेचविधानेविशेषविधिःशेषनिषेधाभ्यनुज्ञाफलकोभवतिपुराणेसर्वशाखाप्रत्ययमेकंक
र्मेतिन्यायात् योगियाज्ञवल्क्यवाक्येविहितप्रणवव्याहृतिसाहित्यस्यावश्यकोपस्थितेश्च नचतत्साहित्यस्यावश्यकोप
स्थितौकात्यायनसूत्रेतत्साहित्याभिधानमनर्थकमापद्येतेतिवाच्यम् कात्यायनसूत्रं कलाःकल्पेचन्यायलभ्यस्यप्रमा
णांतरसिद्धस्यचार्थस्यैकीकृत्याभिधानम् तेनतत्साहित्यसूत्रस्यानुवादकता परिभाषावाक्येनैवसाहित्यमात्रेःसिद्धत्वा

त् तस्मात्प्रणवव्याहृतिसहित या एव गायत्र्याः प्रथममपि त्रिर्जपः सुगतिसोपाने त्रिरिति स्फुटमेवोक्तम् ततो देवताभ्य इति त्रिर्जपः त
त्रापि संप्रदायभेदः देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति वाजसनेयिभिः पठ्यते नमः
स्वधायै स्वाहायै नित्यमेव भवन्त्विति तु सामगैः पठ्यते इति केषांचिद् विभागं केषांचिद्वैपरीत्येन विभागः तत्रास्माकं प्रथमः पक्षः तत्रोपदे
श एव शरणम् तत आसनोत्सर्गः स निर्विवादः तत आवाहनम् तत्रापात्रके पि श्राद्धे विश्वान्देवानहमावाहयिष्ये पितॄनहमावा
हयिष्य इति प्रश्नः क्रियतइति संप्रदायः ततोऽर्घकरणं तत्र शन्नोदेवीरिति जलप्रक्षेपः तिलोसीति तिलप्रक्षेपः तत्र स्वाहांतो
यं मंत्रो वाजसनेयिभिः पठनीयः वाजसनेयिकल्पे कात्यायनसूत्रे स्वाहांतस्यैवोपदेशात् न च लिपिमात्रमत्र शरणं परंपरासिद्ध
त्वादुपदेशस्य गुणि सर्वस्व नाम्नि मंत्रव्याख्यानग्रंथे पि तु हे श्यतया स्वधांतो यं मंत्र इति भ्रमो हेयः कात्यायनसूत्रे स्वाहांतस्यैवोप
देशादित्यभिधानेनोपदेशस्य परंपरासिद्धतया स्थेयात् ॥ अत्र पवित्रोपरि जलांतरं वाजसनेयिनः केचिद्ददति सामगानामुदकां
तरदानमेतदिति कृत्वा न केचिद्ददति तत्र दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक् पृथगिति वायुपुराण वाक्यं प्रमाणं नियामकाभा
वादिति सर्वेषां यजुर्विदामपि जलांतरदानमुचितं ततो या दिव्या इति पाठः तत्र आपः शिवाः सशं स्योना सुहवाइत्यत्र केचित्प्र
थमं तालव्यशकारं पठंति केचित् शंकारमूर्ध्न्यं दन्त्यमेव सकारं पठन्ति तत्र यजुर्विदां शंकारसंहितो दंत्यः सकारः पठनीयः ॥
यजुर्वेदी पुस्तकस्य मंत्रस्य दंत्यसकारे पि परंपरोपदेशस्थैर्यादिति ततो र्घोत्सर्गः तत्रोत्सर्गवाक्ये प्रथमं युष्मत्पदोच्चारणम् त
तो देयद्रव्योच्चारणम् असावेष ते र्घ इति कात्यायनेनानुपूर्वीविशेषोपादानात् तथा च एष वो हस्तार्घः एष ते हस्तार्घ इति वाक्यं

श्रा॰ ततः पित्राद्यर्घपात्राणां न्युब्जीकरणं तत्र प्रपितामहार्घपात्रस्य प्रथमं ग्रहणं जलादि पितामहार्घपात्रे कृत्वा तदपि पित्रार्घपात्रे कृत्वा ओं
वि॰ पितृभ्यः स्थानमसीति एकदैव पात्रत्रयस्याधोमुखस्य वामप्रदेशेऽवस्थापनं केचित्प्रथमं पितृपात्रं न्युब्जीकृत्य तदुपरि पितामह
३ पात्रं तदुपरि प्रपितामहपात्रं न्युब्जीकुर्वंति एतत्तु न मनोरमम् पितृभ्यः स्थानमसीति न्युब्जपात्रं विदधातीति कात्यायनेन त्रया
णामेकदैवस्थापनविधानात् ततो गंधादिदानं पात्रपक्षे प्रत्येकं तत्प्रतिपादनम् ततो जलादिना चतुष्कोणमंडलकरणम्
अत्र मंडले दिगुपक्रमनियमः प्रमाणाभावान्नास्ति ततो जले आहुतिद्वयहोमः तत्रान्नेव्यंजनयोगो न कर्तव्यः उद्धृत्य घृता
क्तमन्नं पृच्छत्यग्नौ करिष्य इत्यत्र घृताक्तान्नमात्रस्य विधानात् जुहुयाद्व्यंजनक्षारवर्जमन्नं ततो जल इति विष्णुपुराणीयवा
क्यांतरे निषेधाच्च ततो भूस्वाम्यन्नदानं ततो हुतशेषप्रक्षेपः पात्रेषु ततः प्रत्येकं परिवेषणं ततो मधुवाता इत्यादि ऋक्त्रय
पाठः मधु मधु मध्विति च पाठः अत्र बहूनां मधु मधु मध्विति मंत्रपाठस्यानाचरणम् तत्रास्मन्मते ऽन्नं मधुमयं कृत्वा मधु
वाताभिमंत्रितमिति यमवाक्ये मधुवाता इति पदस्य मधुप्रकाशकमंत्रोपलक्षणपरत्वान्मधुनक्तं मधुमान्न इति ऋक्द्वयो
पस्थापकवन्मधु मधु मध्वित्यस्याप्युपस्थापकत्वम् मधुप्रकाशकत्वस्य तौल्यत्वात् अत एव सुगतिसोपाने सर्वश्राद्धप्रयो
गेऽन्नावसरे मधु मधु मध्विति च सर्वत्र लिखितं अत्रान्नोत्सर्गानंतरं गायत्री मधुवाता इत्यादि जपः ततोऽन्नहीनपाठः इति
सुगतिसोपाने भवशर्मप्रतिहस्तकग्रंथे क्रमः अन्नोत्सर्गानंतरमन्नहोमपाठः ततो गायत्री मधुवाता इत्यादिपाठ इति पितृ
भक्त्यादौ क्रमः तदनयोः क्रमयोर्विकल्प एव सव्याहृतिकां गायत्रीं मधुवाता इति ऋचं जप्त्वा यथासुखं वाग्यता भुंजीरंस्ते पि वा

ग्यताइतियाज्ञवल्क्य वाक्यानुसारेणसुगतिसोपानादिलेखनं कात्यायनसूत्रमंत्रानुसारेणपितृभक्त्यादिलेखनम् तथाचका
त्यायनसूत्रम् वैष्णव्यर्चायजुषावान्नेंगुष्टमवगाह्योष्णं स्विष्टमन्नंदद्यांच्छक्त्यावाग्नतुजपेद्यादृतिपूर्वांसप्रणवांगायत्रीम
धुवाताइतिस्यचमिति अस्मत्संप्रदायेतु ग्रेतस्माहेषुमतिहस्तकभवशर्मग्रंथेनव्य वहारः तदितरस्माहे षुपितृभक्तिले
खनानुसारेणव्यवहारः॥ अत्रइदमन्नमिमाआपइदमाज्यमित्यन्नजलघृतेषुंगुष्टनियोजनमिति।बहुषुनवीनग्रन्थे
षुलिखितं इदमन्नमिमाआपइदमाज्यमित्यन्नजलघृतेषुंगुष्टनियोजनानंतरमिदंहविरितिपुनरन्नेष्वप्यंगुष्टनियोज
नमितिप्राचीनसंप्रदायः तदनयोः पक्षयोः प्राचीनसंप्रदायः प्रामाणिकः तथाहिकल्पतरौश्राद्धकांडेपैठीनसिः इदं ह
विरित्येवंसांगुष्टमन्नविधिर्ब्राह्मणेभ्योदद्यात्॥अस्यायमर्थः॥अन्नविधिरन्नप्रकारःपायसादिःसब्राह्मणांगुष्टनिवेशनपूर्व
कमिदंहविरित्यभिधायसंकल्पनीयइतिलिखितं अत्रान्नोत्सर्गवाक्यएवतेनान्नसोपकरणंस्वधेतिक्रमः एवमर्घपिण्डस्व
धादानेष्वपिप्रथमंतेपदोच्चारणंततोदेयद्रव्यनामोच्चारणंकर्त्तव्यम् कात्यायनादौतथैववाक्यश्रवणात् मेतस्माहेषुब्रह्म
पुराणाद्यनुसारेणवाक्यम् तत्रनायंनियमः ततः पवित्रजपानंतरमन्नविकरणम् तत्रमंत्रद्वयम् अग्निदग्धायेजीवा
येप्यदग्धाःकुलेमम भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिमित्येकः अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम भूमौदत्तेनतृ
प्यंतुतृप्तायांतुपरांगतिमित्यपरः तत्रयजुर्वेदिनांनियमतः प्रथममंत्रेणैवान्नविकरणं कात्यायनेनतस्यैवगृहीतत्वात्
वेदमूलत्वाभावाद्वितीयमंत्रःपौराणिकत्वात्प्रयोज्यइति ततआचमनंततोहरिस्मरणं ततोगायत्रीमधुवाताजपःसचसव्येन

अपसव्येनभ्रमणाभावात् श्राद्धोपक्रमगायत्रीजपवत् नचपूर्ववद्गायत्रीजपित्वेति कात्यायनसूत्रे पूर्ववदित्यतिदेशादपसव्य
प्राप्तिरितिवाच्यं पूर्वमपसव्योपदेशाभावात् तथाच तत्रपूर्ववदित्यनेन पूर्वोपदिष्टप्रणवव्याहृतिसाहित्यस्यातिदेशः भवशर्मप्र
तिहस्तकमते ऽत्र गायत्री मधुवाताजपोनास्ति ततः पिण्डस्थानेऽपसव्येनरेखाकरणम् उल्मुकभ्रामणम् छिन्नमूलकुशा
स्तरणम् सव्येनदेवताभ्यपितृभ्यश्च इतिजपः ततोऽपसव्येनपिण्डस्थानेऽवनेजनदानम् ततःपिण्डोत्सर्गः तत्रापितेपद
स्यप्रथमंततःपिण्डःस्वधेतिवाक्योच्चारणम् ततःकरप्रोक्षणं ततआचमनं तत्रत्रिराचम्येत्यभिधानात् चुलुकत्रयात्मक
स्याचमनपदार्थस्यत्रिरित्यनेनान्वयात् चुलुकनवतयाऽऽचमनंमन्यंतेवस्तुतस्त्वाचमनस्वरूपस्यचुलुकत्रयात्मकस्यै
वस्वरूपेणोपादानमनुवादरूपत्वादिति भातिततोऽत्रपितरइत्याद्यनुष्ठानंततःप्रत्यवनेजनंततोनीवीविस्रंसनंततः
आचमनंततःसव्यहस्तेनसूत्रमादायदक्षिणहस्तेनवामान्वारब्धेनपिण्डोपरिसूत्रधारणंनमोइतिपठित्वा ॐएतद्वःपि
तरोवासइतिप्रत्येकमविकृतेनमंत्रेणततस्तदुत्सर्गः ततस्सूक्ष्मीगंधादिदानं ततोऽक्षय्योदकदानादि अत्रापात्रकेश्रा
द्धेऽक्षय्योदकदानादीनिकेचिन्निवर्त्तयंति प्रतिवचनाभावात् तन्नयुक्तं एवंसतिप्रथमगायत्रीजपादेरपिनिवृत्तिरापद्येत॥
ब्राह्मणानुज्ञानाभावात्तस्माद्ब्राह्मणाभावेब्राह्मणकर्तृकाण्यनुज्ञानप्रतिवचनादीनिनिवर्त्तंतांभोजनवत् नतुयजमानक
र्तृकजपादीनि निवर्तन्ते अन्नोत्सर्गादिवदिति ततआशीः प्रार्थनं तत्रदातारोनोभिवर्द्धंतांवेदः संततिरेवचेत्यत्रवेद
शब्दस्यप्रथमैकवचनांतस्यास्मत्संप्रदायपाठः कात्यायनसूत्रेप्रथमैकवचनांतस्यैवपारंपर्योपदेशात् अग्निपुराणादौ॰

तथादर्शनाच्च ततस्तूष्णीं पिण्डोपरि सपवित्रकुशत्रयदानं ऊर्ज्जं वहन्तीरिति जलधारादानं पिण्डोत्थापनम् उल्मुकस्यच्छिन्नमू
लानां चाग्नौ प्रक्षेपः अर्घपात्रोत्तानीकरणं दक्षिणादेवताभ्य इति जपः दीपनिर्वापन हस्तपादप्रक्षालनम् आचमनम् विष्णुस्म
रणम् श्राद्धीयद्रव्यस्य ब्राह्मणेभ्यः प्रतिपादनम् एकोद्दिष्टे तु एकस्योद्देश्यतया एकवचनात् प्रयोगेण वाक्यं ॐ अद्याऽमुकमासी
यामुकतिथौ अमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्य इति संकल्पवाक्यम् आश्विनकृष्ण
चतुर्दश्यां शस्त्रहतादीनामेकोद्दिष्टम् शस्त्रादिहेतुकमरणयोगिनामाश्विनकृष्णचतुर्दशी श्राद्धाधिकरणं विधीयते त
त्राच निमित्तानां तदधिकरणोपस्थितिमात्रेण चरितार्थत्वात्संकल्पवाक्ये निमित्तोल्लेखो विफल इति ॐ अद्याऽश्विनकृष्ण
चतुर्दश्याममुकगोत्रस्य पितुरमुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्य इत्येवमेव संकल्पो युक्तः एवमशौचादिना ऽऽद्या हे सांव
त्सरिकैकोद्दिष्टश्राद्धाकरणेऽशौचान्ते सति या तिथिः प्राप्यते तस्यामेकोद्दिष्टं श्राद्धं कर्त्तव्यम् शुचीभूतेन दातव्यं या तिथिः प्र
तिपद्यते सा तिथिस्तत्र कर्तव्या न त्वन्या वै कदाचनेति वाक्येन शौचावस्थाप्राप्ता प्रथमतिथिः श्राद्धाधिकरणत्वेन बोध्यते तत्रा
पि निमित्तोल्लेखोऽप्रयोजकः प्राप्ततिथेरेवोल्लेखः प्रयोजकः तथा चाद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रस्य पि
तुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्य इत्येवं संकल्पोऽन्याय्यः प्रेतश्राद्धरूपैकोद्दिष्टविशेषः तत्र प्रेतत्वविमुक्ति
हेतुषोडशश्राद्धान्तर्गतैकादशाहश्राद्धमहं करिष्ये इत्येवं सुगतिसोपानवाक्यम् तन्न युक्तं त्र्यहाशौचमासिकाशौचान्तद्वि
तीयदिने एकादशाहपदस्यानन्वयात् न चाशौचान्तद्वितीयदिनश्राद्धस्य नामैवेदं पारिभाषिकं तथा विधानात् न चैकादश

हपदस्याशौचांतद्वितीयदिनोपलक्षकतयाऽशौचांतद्वितीयदिनोपस्थापकमेवैकादशाहपदं मुख्यशब्दसंभवे पौरुषेयवाक्ये उ
पलक्षकशब्दप्रयोगस्याऽन्याय्यत्वात् स्वापत्तेपदप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामहे इत्यभिधानात् नचागमस्यैवैकादशा
हपदेनाशौचांतद्वितीयदिनश्राद्धमुपलक्षितमिति तत्पदप्रयोगस्यस्वापतत्त्वाभावइतिवाच्यम् तेनप्रकारेणस्मृतिष्वश्रवणा
त् तस्मात्प्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गताद्यश्राद्धमहंकरिष्यइतिसंकल्पोयुक्तः तथाहिद्वादशप्रतिमास्यानिआद्य
षाण्मासिकेतथाम्पिंडीकरणंचेतिप्रेतश्राद्धानिषोडशेतिवाक्ये षोडशश्राद्धानामाद्यादिनाम कथनंततस्तेषुमध्ये किं
कुत्रविधातव्यमित्यपेक्षायामाद्यमेकादशेहनीति अशौचांतद्वितीयदिनमाद्यश्राद्धाधिकरणत्वेनविदधाति तथाचा
द्यपदेनैवसंकल्पः कर्तव्यः सर्वाशौचांतद्वितीयदिनेमुख्यशब्दोपस्थितत्वेनाद्यस्यैवोपस्थितत्वात् षोडशश्राद्धगणनायामाद्य
शब्देनकीर्तनान्मूलवाक्योद्दिष्टस्थितप्रकारेणैवकीर्तनं लौकिकवाक्येपियुज्यते अन्यथायादृच्छिकतत्तदर्थोपस्थापक
शब्दपरिग्रहे सर्वत्रागमप्रतिपादितार्थोपस्थितावनियमप्रसंगः नन्वेवमूनषाण्मासिकेनवार्षिकपदेनसंकल्पवाक्येषा
ण्मासिकद्वयकीर्तनंनसंगच्छते मूलवाक्ये षाण्मासिकपदेनोत्कीर्तनात्तत्पदोत्कीर्तनस्यैवप्रयुक्तत्वात् इतिचेन्नषाण्मा
सिकेतथेतिसंक्षेपेणतयोरेवाभिधानात् अहरशब्देनधर्माधर्माभिधानवत् तथाचमुख्यशब्दत्वादूनषाण्मासिको
नवार्षिकपदेनोत्कीर्तनंसंगतं अनेनैवाशयेनैतयोरेवोनषाण्मासिकोनवार्षिकत्वेनप्रसिद्धिरिति विवरणंकृतंपितृभ
क्तश्रीदत्तोपाध्यायैः अतएवद्वादशप्रतिमास्यानीति मूलवाक्येनप्रथममासिकादीनामेवाभिधानात्प्रथममासिकादि

पदेनैव संकल्पः सर्वेषां निर्विवादः प्रथममासिकादिप्रयोगवाक्यं निर्विवादं सपिण्डीकरणेपि वाक्ये विवादाभाव अ
र्घजलसंयोजने पिण्डसंयोजने च विवादः तत्र केचिद्विभागे संयोजने च मंत्रान्वयं कुर्वंति केचित्संयोजनमात्रे तत्रोभयत्र
मंत्रान्वयः क्रियते इति युक्तः पक्षः तथाहि प्रेतपात्रं पितृपात्रे ष्वासिंचति ये समाना इति द्वाभ्यामेतेनैव पिण्डा व्याख्याता इ
ति कात्यायनसूत्रेण संयोजने मंत्रान्वयो बोध्यते निरुप्य चतुरः पिण्डान् श्राद्धदः प्रतिनामतः ये समान इति द्वाभ्यामाद्यं
तु विभजेत्त्रिधा स्मृत्यर्थविधिः पूर्वमर्घपात्रचतुष्टये इतिवाक्येन विभागे मंत्रान्वयो बोध्यते अत उभयत्र मंत्रान्वयः
प्रामाणिकः न च कात्यायनसूत्रश्रुतसंयोजनमात्रान्वयबलेन विभजेदित्यस्य मुख्यार्थत्यागो युक्तः निरपेक्षश्रुतवाक्य
योस्तुल्यबलतया बाध्यबाधकभावाभावेन भिन्नविषयतायां विरोधाभावे नैकस्यापरवाक्यस्थपदमुख्यार्थत्याजने
सामर्थ्यात् अन्यथा निरूप्येति वाक्यश्रुतविभागान्वयबलेन कात्यायनसूत्रश्रुतावसेचनपदस्यैवार्थांतरकल्पना किं
न स्यात् विनिगमनाविरहात् प्रस्तुत एकस्य द्रव्यस्य द्रव्यत्रयेण क्रमेण समं संयोजने विभागस्यावश्यकत्वाद्विभागप्राप्तौ
तत्रापि मंत्रापेक्षायामुपस्थितमंत्रान्वयस्य योग्यत्वाद्विभागे मंत्रान्वयो युक्तः तत्र चैकविनियोगप्रयुक्तत्वान्मंत्रयोरादा
वेव प्रणवोच्चारणं न मध्येपीति अत्राक्षय्योदकदानवाक्ये श्राद्धविशेषणत्वेनोपात्तानां षष्ठ्यंतानां पदानां दानोद्देश्यभू
ताभिधायकानां च षष्ठ्यंतानां पदानां प्रयोगे पौर्वापर्ये नियमो दृश्यते तत्रोभयत्राप्यन्वयप्रतीतेरवैकल्यात्फलतो
न विशेषः एवं दक्षिणादानवाक्येपि अभ्युदयिकसंकल्पवाक्येपि न विवादः नांदीमुखे विवाहे च प्रपितामहपूर्वकम् ।

वाक्यमुच्चारयेत्याज्ञो अन्यत्र पितृपूर्वकमिति यद्यप्यस्ति प्रपितामहानुपूर्वी वाक्यकरणे प्रमाणं तथाप्युपदेशानुरोधात्पितृ
पूर्वकमेव वाक्यं क्रियते तत्रोपदेश एव बहुप्रामाणिकानुमतः शरणं वस्तुतः प्रपितामहपूर्वकं वाक्यं युक्तं अत्र पित्राद्युद्देशपा
त्रेषु यवप्रक्षेपे विवादः तत्र तिलप्रक्षेपमंत्रातिदेशेन यवादिपदप्रक्षेपेन पाठः स्वाभिमानो बीजं वस्तुतो ऽतिदेशेन प्रमा
णं हलायुधनिबंधे मुख्यत एव एवमेवास्य मंत्रस्योपदेशादिति तत्र यवोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः
पृक्तः पुष्ट्या नांदीमुखांल्लोकान्प्रीणाहि नः स्वाहेत्यस्मत्संप्रदाये पाठः स च हलायुधनिबंधे तथैव मंत्रस्य लेखनादुप
देशस्य परंपराप्राप्तत्वेन स्थैर्याच्च तथैव युक्तः प्राचीनपितृभक्तिश्राद्धकल्पादिग्रंथेषु तथैव लेखनाच्च केषुचिद्ग्रंथे
ष्वग्रे शोधयित्वा नांदीमुखान् पितॄन् लोकान्प्रीणाहि नः स्वाहेति पितॄनिति पदमधिकं दत्तमस्ति तदधिकमेवेति॰
अत्र भूस्वाम्यन्नदानोपदैवविधिं कुर्वंति तन्न युक्तं तस्याभ्युदयिकबहिर्भूतत्वेन दैवविधौ प्रमाणाभावात् तथा
च पित्र्यविधिनैव युक्तमिति अत्र नांदीमुखाः पितरः प्रीयंतामित्यक्षय्यस्थाने इति कात्यायनसूत्रं तत्रान्यत्र कथि
त षष्ठ्यंतपदवारणार्थं प्रथमांतपदेन निर्देशः पितरः प्रीयंतामिति चोक्तं एतदेव वाक्यं मंत्रप्रयोक्तव्यमिति केचि
त् अस्मत्संप्रदाये तु श्राद्धात्पूर्वत्यत्तेकोद्देश्यतायां बाधकाभावात् वाक्यस्य षष्ठ्यंतपदाक्षय्यपदप्रयोगनिवा
रणार्थत्वेन चरितार्थत्वात् अमुकगोत्रा माताऽमुकदेवी नांदीमुखी इदं दत्तेतदन्नपानाद्याभ्युदयिकश्राद्धेभिप्रीय
तामिति वाक्यं क्रियते अत्र वैदिकमंत्रेष्वपि नांदीमुखपदं योजयित्वा पठंति॥ अत्र नांदीमुखाः पितरो मादयध्वम्॥ ॥

दैवविधि सख्यन्या रूप

ननोवोनांदीमुखाः पितरो रसायेत्यादिक्रमेण तन्नयुक्तम् मंत्रे पितद्योजनस्याप्रामाणिकत्वात् लौकिकवाक्येष्वेव नांदीमुखा
न् पितॄन् हमावाहयिष्ये इत्यादिनाप्रकारेण प्रतिपदं तत्र नांदीमुखपदयोजनात् नित्यश्राद्धेपि गोत्रसंबंधिपदानामुच्चारण
पूर्वकमेव वाक्यं पितृभक्तावपि तथैव लिखितं अत्र केचिद्दक्षिणादानं न कुर्वंति तन्नयुक्तम् हुतं यज्ञमदक्षिणमिति वाक्ये
न दक्षिणाया आवश्यकर्तव्यत्वेन बोधनात् यज्ञपदेन तत्र श्राद्धस्याभिधानात् प्रकरणात् न च नित्यश्राद्धमदैवं स्याद्द
क्षिणापिण्ड वर्जितमिति वाक्येन विशेषदक्षिणानिषेधः अकरणेऽनिष्टश्रवणस्यान्यथास्थापयितुमशक्यत्वात् दक्षिणा
पिंडवर्जितमिति वाक्ये ऽन्वयस्यान्यथाप्युपपत्तेः सामान्यतःप्राप्तदक्षिणाविधेर्बाधकत्वाभावात् तथाहि श्राद्धपल्लवे व्या
ख्यातम् नित्यश्राद्धमदैवं स्यादर्घपिंडविवर्जितं च दक्षिणादेयेत्याक्षिप्यते तेन तत्र नित्यश्राद्धे दक्षिणा देयेत्यर्थः इति ए
तत्स्कंदपुराणादिवाक्ये यीदृशमन्यथायोजयितुं सुकरं दक्षिणाबोधकवाक्यमनन्यथासिद्धमिति अत एव पितृभक्ताव
पात्रकनित्यश्राद्धप्रयोगलेखनेपि ततो यथाशक्ति दक्षिणां दद्यादिति सिद्धवद्दक्षिणादानं लिखितं नित्यश्राद्धमदैवं स्यादर्घ
पिंडविवर्जितमिति वाक्यं लिखितं तेन दक्षिणानिषेधशंकापि नावतारिता नित्यश्राद्धाभिधायकं वाक्यमवतीर्य तत्र चा
र्घपिंडावाहनविश्वेदेवश्राद्धानि निषिद्धानि पूर्वदिननियमश्राद्धदिननियमाग्नौकरणश्राद्धोत्तरकर्मज्ञातिभोजनान्याचा
रान्निवर्तंते इति च निषिद्धपरिगणने दक्षिणा न गणिता पितृभक्तौ स्मृतिसारादावपि दक्षिणादानं कर्तव्यमिति लिखितम्
अतो मीमांसकोनामप्य पात्रकेपि नित्यश्राद्धे दक्षिणादानसंप्रतिपत्त्या निर्विकल्पकं दक्षिणादानं तीर्थश्राद्धे तु विशेषः ॥

तथा आमान्नेनैव कर्तव्यमर्घावाहनवर्जितमिति तथाच देवीपुराणे तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन अन्नार्थिनमनु
प्राप्तं भोज्यं तं मनुरब्रवीत् सक्तुभिः पिण्डदानं च संयावैः पायसेन वा कर्तव्यमृषिभिर्दिष्टं पिण्याकेन गुडेन वा देयं तु तिलपिण्या
कं शक्तिमद्भिर्नरैः सदा श्राद्धं तु तत्र कर्तव्यमर्घावाहनवर्जितं श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतं च यत् श्राद्धं तत्तैर्थि
कं [illegible] पितॄणां तृप्तिकारकं अकालेप्यथवा काले तीर्थे श्राद्धं तथा नरैः प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणं पिंडदा
नं ततः शस्तं पितॄणां चातिवल्लभं विलंबो नातिकर्तव्यो न च विघ्नं समाचरेत् संयावो घृतगोक्षीरगोधूमासाधितो भोज्यविशे
षः [illegible] पिण्याकस्तिलखलिः पुनस्तिलपिण्याकपदं तिलमात्रविधायकमिति पितृभक्तिः अकाले विहितामावास्यादि
व्यतिरिक्तेपि न तु निषिद्धेपि निषेधविधानविरोधात् न च निषेध एतद्व्यतिरिक्तविषयः सामान्ये बाधकाभावात् न चैत
द्देववाक्यं बाधकं [illegible]तस्यान्यथोपपादनादिति एवमेव पितृभक्तिः पिंडदानमुखेन प्रधानश्राद्धविधानमेव तत्र तत्तद्वा
क्यके [illegible] श्राद्धं तु तत्र कर्तव्यमिति स्वयमेवाभिधानात् पिंडदानं ततः शस्तमिति तीर्थे केवलपिंडदानमपि कर्तव्यमिति
बोधितं प्राप्तैरेव सदा कार्यमित्यनेन विलंबो नातिकर्तव्य इत्यनेन च तीर्थप्राप्तौ तथा कर्तव्यं यथा तीर्थप्राप्त्यनन्तरमाद्यादि निषि
द्धकालांतरसंयोगो न भवति ॥ किंतु तीर्थप्राप्त्यानंतरं तीर्थश्राद्धक्रियानुगुणस्नानसंध्यातर्पणदेवपूजानंतरमेव श्राद्धक्रिया
क्रियत इति बोध्यते तदनुगुणातिरिक्तस्वाध्यायाचरणेन विलंबसंभवात् अतो दिनानंतरे तीर्थप्रवेशे रात्र्यादौ कृत्वा दि
नांतरे श्राद्धं [illegible] तदिदं तीर्थश्राद्धमामान्नेनैव कर्तव्यं आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा आमश्राद्धं द्विजैः का

अन्यथा अमावास्या दिव्यतिरि[illegible] काल विषयता

विषयमेव देवीपुराणवाक्ये

प्रधा: श्राद्धं [illegible] ७

यं शूद्रेणतुसदैवहीति वाक्येन द्विजानामपितीर्थे आमान्नश्राद्धविधानात् अत्रापदीति आत्मनोदेशकालादीनांचोप
प्लवावस्थाकथिताते नस्वाशक्तौदेशकालोपप्लवेपाकक्रिययाश्राद्धासंभावनायामामश्राद्धंकर्तव्यमित्यर्थः अनग्नावि
तिपाकयोग्याग्निरहितइत्यर्थः नत्वनग्नौश्रौतस्मार्ताग्निरहितेइत्यर्थः अनग्निमतामपिब्राह्मणानांसांवत्सरिकादे
सिद्धान्नश्राद्धाचरणस्यसर्वप्रामाणिकसंमतत्वात् आमश्राद्धेपिण्डादिकमपिआमान्नेनैवकर्तव्यम् यदाहजाबालिः
आमश्राद्धप्रदोऽनग्निःसर्वेनैवमनीषिणः येनाग्नौकरणंकुर्यात्पिण्डांस्तेनैवनिर्वपेदिति अत्राप्यनग्निःपाकयोग्याग्निरहि
तइत्यर्थः काम्यंश्राद्धमामान्नेननकर्तव्यम् तथाहलघुहारितः श्राद्धविघ्नेद्विजातीनामामश्राद्धंप्रकीर्तितम् अमावा
स्यादिनियतंमाससंवत्सराद्दृते इति अत्रनियतमावश्यकमित्यर्थः तेनावश्यकेऽमावास्यादिश्राद्धेऽग्न्याद्यभावेआमा
न्नविधिःनकाम्ये आवश्यकेपि मासिकसांवत्सरिकादावेकोद्दिष्टेनामान्नविधिः माससंवत्सराद्दृते इतिवचनात् एको
द्दिष्टंतुकर्तव्यंपाकेनैवसदास्वयमितिसिद्धान्तस्यैववाक्यांतरेणापिनियमतोविधानात् पाकासंपत्तौचसएवाह अभा
वेपाकपात्राणांतदहः समुपोषणमिति शूद्रेणसर्वश्राद्धमामान्नेनैवचकर्तव्यम् शूद्रेणतुसदैवहीतिवाक्यात् आम
श्राद्धेमासादिव्यंजनान्यामान्येवदेयानीति श्राद्धपल्लवः भुजबलभीमे अपत्नीकःप्रवासीचयस्यभार्यारजस्वला आ
मश्राद्धंद्विजैःकार्यंशूद्रेणतुसदैवहीति अथदंपतिपूजनविवेचनं तत्रसंपूज्यद्विजदांपत्यंनानाभरणभूषणैः हयोत्स
र्गंचकुर्वीतदेयाच्चकपिलाशुभेतिवाक्यम् अत्रनानाभरणभूषणैरिति भूषणपदंक्रियापरंनपुनरुक्तिः अत्रसंपूज्येति

श्रा० क्यो श्रवणात् वृषोत्सर्गांगं दंपतिपूजनमित्याहुः तन्न विनिगमनाभावेनोभयस्यापि प्रधानत्वात् समानकर्तृकतावोधनमात्रे
वि० ण क्त्वाश्रुतेरित्युपपत्तेरिति दंपतिपूजनस्य प्रधानत्वात् वृषोत्सर्गाकरणेपि दंपतिपूजनं युक्तम् अथ वृषोत्सर्गविवेचनम् ॥
८ तत्र वृषस्तरुणो वत्सतर्यश्च त्रिहायिन्यः चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः लाक्षारससवर्णश्च तं नीलं इति निर्दिशे
त् एवंविधवृषाभावेन्यो वृषभो यो यस्योपादेयस्तमाह वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते स्निग्धरक्तेन वर्णेन क्षत्रि
यस्य प्रशस्यते कांचनाभेन वैश्यस्य कृष्णेनाप्यंत्यजन्मनः अत्र वृषोत्सर्गस्य वैदिकबहुमंत्रसाध्यतया वेदोच्चारणान
र्हतस्य शूद्रस्य वृषोत्सर्गानधिकारप्राप्तौ कृष्णेनाप्यंत्यजन्मन इति शूद्रं प्रति वृषविशेषोपदेशेन वेदोच्चारणेऽधिकारबो
धनात् वृषोत्सर्गाधिकारो बोध्यते वेदोच्चारणेन विना तत्करणक वृषोत्सर्गानधिकारे वृषविशेषकथनानर्थक्यापत्तेः त
स्मात् वृषविशेषोपदेशान्यथानुपपत्त्या शूद्रस्यापि वृषोत्सर्गेऽधिकारः कथ्यते तत्रापि एतयैवोत्सृजेरन्निति वृषोत्सर्गे
वैदिकवाक्यकरणत्वनियमविधानात् तेन विनोत्सर्गस्यानुपपत्तेरन्यथानुपपत्त्यापि शूद्रस्य वृषोत्सर्गवाक्य एव वेदपाठो ना
न्यत्रेति सर्वं प्रामाणिकसिद्धम् शूद्रतुल्यन्यायतया मंत्ररहितायाः स्त्रिया अपि वृषोत्सर्गेऽधिकार इति केचित् तन्न शूद्र
वत् स्त्रिया अप्यधिकारबोधने प्रमाणाभावात् नहि तस्या अधिकारबोधनं विना कस्यचिद्वाक्यस्यानुपपत्तिः सामान्य
विधेर्विशेषवचनेन हि बाधः बाधकस्य चानुपपत्तिमूलकत्वात् यावत्यबाधिते नुपपत्तिप्रशमो न भवति तावदेव बाध्यते
न चात्र सामान्यविधिप्रवृत्तौ काचिदनुपपत्तिरिति न तस्या अधिकारः एवमनुपनीतस्य त्रैवर्णिकस्य वेदशून्यतया वृषो

एतयैव एतयुपा नीयोपा- रा० ८

यथा वृषविशेषबोधकवाक्यान्यथानुप

त्सर्गेनाधिकारः वृषोत्सर्गकालश्च अशौचांतद्वितीयदिनं कार्त्तिकी चैत्री रेवतीयुताश्विनपूर्णिमा च तत्र कार्त्तिक्यां वृषोत्सर्गात्पूर्वमपूप
दानमधिकम् अशौचांतद्वितीयदिने वृषोत्सर्गे आभ्युदयिकाभावः सपिण्डनानन्तरमाभ्युदयिकेऽधिकारात् अत्राऽशनाय स्वाहे
त्यकारान्ताशनशब्दस्य चतुर्थ्यंतस्य सुगतिसोपाने लेखनम् अशनये स्वाहेतीकारान्ताशनिशब्दस्य चतुर्थ्यंतस्य पाठः प्रमाण
सिद्धः तथाहि अथ वृषोत्सर्गो गोयज्ञेन व्याख्यात इति पारस्करसूत्रे पूर्वोपदिष्टस्य गोयज्ञधर्मस्यातिदेशात् अग्निरुद्रशर्वप
शुपत्युग्राशनिभवमहादेवेशानानां देवतानां पायसाहुतावुपस्थितिः तत्राशनिशब्द इकारान्त एवोपदिष्टः तत्रापि यजुर्वेदी
य माध्यंदिनीशाखाभाष्ये मन्त्राह ऊनचत्वारिंशेऽध्याये अग्निं हृदयेनाशनिं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भ
वं यक्ना शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्यामिति
कण्डिकायामग्न्यादिदेवतानां कथितानां गोयज्ञे उपदेशस्तस्यां कण्डिकायामशनिशब्दस्येकारान्तस्योपादानम् एतत्कण्डि
कापाठः शतपथे तस्मादशनिरसीति नामनिरुक्तिश्च पारस्करगृह्यसूत्रपद्धतिषु अशनये स्वाहेति प्रयोगश्च प्रमाणम् अश
नशब्दस्य कुत्राप्युपदेशसंभावनायामपि एवमशनिशब्दस्य प्रामाणिकत्वमभितो वृषोत्सर्गाहुतिषु अशनेरेव देवतात्वं नाश
नशब्दस्येति स्थितम् पिष्टकाहुतिमंत्रे पि पाठद्वैतं तद्विवेचनार्थमर्थः पदानि च विविच्यंते तत्र एषा गा अन्वेतु न इत्यादिको मं
त्रः तत्र प्रथममादित्यविशेषवाचकः पूषन्शब्दः प्रथमैकवचनांत उपात्तः ततो गोशब्दः पशुवाचको द्वितीयाबहुवचनांत उ
पात्तः तत इण्गतावनुपूर्वो लोट् मध्यमपुरुषैकवचनांतः ततः षष्ठीबहुवचनांतस्यास्मच्छब्दस्य नस्मादेशरूपन्न इति पुनः पू

षण् शब्दस्य ताहशस्यैवोपादानम् ततोरक्षपालनइत्यस्यलोट् प्रथमपुरुषैकवचनांतस्यप्रयोगः ततोऽर्वन् शब्दस्याश्ववाचक स अर्वणस्त्रसावनञइतिसूत्रेणतत्रादेशेकृतेऽर्वतइतिद्वितीयाबहुवचनांतः ततःपूषण्शब्दस्यताहशस्यैवोपादानम् ततो वकारादेर्वाजशब्दस्यान्नवाचिनोद्वितीयैकवचनांतस्यरूपम् तस्यचमोनुस्वारेकृतेयजुष्यात्सकारेप रतोऽनुस्वारोच्चारणं ततःषणुदानइत्यस्यानुबंधलोपेसत्वनत्वयोःकृतयोस्तनादित्वादुप्रत्ययेगुणेचलोट्प्रथमपुरुषैकवचनांतस्यरूपंसनोत्वि ति ततोऽस्मच्छब्दस्यचतुर्थीबहुवचनांतस्यरूपंनइति तदयमर्थः पूषादेवतानोऽस्माकंगाःपशून् अन्वेतुअनुगच्छतुप्रति पालयत्वितियावत् पूषाऽर्वतोऽश्वान्रक्षतुपूषावाजमन्नंनोऽस्मभ्यंसनोतुददातुएवंपूषागाअन्वेतुनःपूषारक्षत्वर्वतःपू षावाजंसनोतुनःस्वाहेतिव्यवस्थितोमंत्रः तत्रद्वषभांकनेपिविवादःसचसुगतिसोपानेनैवनिर्णीतः दक्षिणपार्श्वेचक्रे णतत्सजातीयपार्श्वेशूलेनचेतिलेखनात् दक्षिणपार्श्वस्यसजातीयन्दक्षिणपार्श्वमेवपश्चाद्भागरूपंतस्यवामपार्श्वइतिप श्चाद्भागीयवामपार्श्वेपुरोभागएवायातिपुरोभागवामपार्श्वविवक्षायांतद्वामपार्श्वेइत्येवंब्रूयात् नतत्सजातीयेतिपदमुपाद द्यादिति हिरण्यवर्णाइत्यादिष्वपिवर्णविवेचनायार्थःप्रदर्श्यते हिरण्यवर्णाइति शुद्धोपलक्षणम् हिरण्यवर्णाः शुद्धवर्णाः शुचयःपवित्राःपावकाःपावयित्र्यःपूञ्पवनेइत्येतस्यण्वुलिअकादेशेटापिपावकादीनांछंदस्युपसंख्यानमित्यकारस्ये त्वप्रतिषेधेरूपम् यासुअप्सुजातउत्पन्नःकश्यपऋषिःयासुअप्सुइन्द्रोमघवायाआपःअग्निंवैश्वानरम् गर्भंभ्रूणंदधिरे धृतवत्यःदुधाञ्इत्यस्यलिटिआत्मनेपदेप्रथमपुरुषबहुवचनेरूपंसुवर्णाःशोभनवर्णाःताआपःनोऽस्माकंसंस्योनाः

कल्याणप्रदाभवंतु यासामपांराजाईश्वरः वरुणःप्रचेताःयातिगच्छतिमध्येऽतरात्तस्मात्ते तथ्यातथ्ये अवपश्यन् अवलोक
यन् जनानांलोकानांद्वितीयाईपूर्ववत् यासांअपांदेवास्त्रिदशाःदिविस्वर्गेऊर्ज्जंतिकुर्वंति ऊर्ज्जविहिंसाकरणयोरित्यस्यरूपम्॥
भक्ष्मदंतीयम् यांआपःअंतरिक्षे आकाशे बहुधाबहुभिःप्रकारैर्भवंतिसंपद्यन्ते द्वितीयाईपूर्ववत् शिवेनकल्याणेनमा
मांचक्षुषा नेत्रेणपश्यत अवलोकयत आपइतिसंबोधनं शिवेंकल्याण्यातन्वामूर्त्याउपस्पृशत आस्पृशतउपस्पृशतेतिस्पृ
शस्पर्शनेइत्यस्योपसर्गपूर्वस्यलोण्मध्यमपुरुषबहुवचनेरूपंत्वचंसहजशरीरावरणंमेममघृतश्चुतःसर्पिःश्चुतःघृतंश्चो
ततीतिश्चुतिरक्षरणे श्चुतिरइत्येके अग्निमधातोर्यकारशून्यस्यक्किपिप्रथमाबहुवचनेरूपम् शुचयः याआपःपावका
यावपित्र्यःतानइत्यादिपूर्ववत् शन्नोदेवीरिति मंत्रोनिर्विवादः वृषभाभिमंत्रणमंत्रोव्याख्यायते पितावत्सानामित्यादि पि
ता ... वत्सानांतर्णकानांपतिःस्वामीअघ्न्यानांगवाम् अर्जुन्यघ्न्यागोरित्यमरः अथोइत्योकारांतोनिपातःसमुच्चये पि
ताजनकः महतांगर्गराणांतरुणपशूनांगर्गराणामितिगृनिगरणे इत्यस्यपचाद्यचि उणादयोबहुलमिति बहुल वचना
द्विर्वचनमभ्यासेरुगागमः गर्गइत्यस्यषष्ठीबहुवचनेरूपम् वत्सःतर्णकःप्रथमांतः सांहितिकउकारः जरायुर्गर्भवेष्टनंश्च
मपुटस्तस्मान्नपुंसकंप्रथमैकवचनंप्रत्तिघुक्तुदुहप्रपूरणेप्रतिपूर्वस्तस्मात्क्किपिप्रथमैकवचनेभषुभावेघत्वेचर्त्वेचरूप
म् पीयूषइतिपेयूषोभिनवंपयः तस्यछांदसत्वादेकारस्येत्वंपीयूषःयद्वापीयूषमिवामृतमिवपीयूषस्तस्मात्प्रथमैकवचने

क

श्रा० सोर्यत्वयलोपो आमिक्षाक्षीरसारः कषसंयोगोऽयंटावन्तः घृतंसर्पिः तदितितच्छब्दान्नपुंसकप्रथमैकवचनं तदनंतरमुशब्दे
वि० निपातःसमुच्चयवाचीततइदम्शब्दस्यषष्ठ्यंतस्यरूपम् तस्मोन्परत उशब्दस्ययणादेशः तद्व्स्वरेतः रेतइतिसकारांतस्य
१० रेतःशब्दस्यवीर्यवाचकस्य ———— नपुंसकेप्रथमैकवचनेरूपम् वत्सादीनियस्यरेतस्तेजःपरंपरयातत्कारणत्वादि
त्यर्थः तथाचमंत्रः पितावत्सानांपतिरघ्न्यानामथोपितामहतांगर्गराणांवत्सोजरायुप्रतिधुक्पीयूषआमिक्षाघृतंत
द्व्स्यरेतः वृषोत्सर्जनमंत्रोव्याख्यायते एनंयुवानमित्यादिनाएतच्छब्देनद्वितीयैकवचनान्तेनोपस्थितंवृषंनिर्दिशति ए
नमुपस्थितंवृषंपतिंस्वामिनंवोयुष्माकंकृतेउपस्थिता वत्सतरीर्लक्ष्मीकृत्यनिर्दिशतिवइति ददामियुजानि तथाचाय
मर्थः हेवत्सतर्योवोयुष्माकंकृतेएनंवृषंददामियुजानिददानीति डुदाञ्दाने इत्यस्यलोडुत्तमपुरुषैकवचनेरूपम्
एतावतायुष्माकमर्थेऽयंवृषोमयोत्सृष्टः स्वस्वत्वध्वंसविषयःकृतइत्युक्तंभवति तदुद्देश्यत्वेनत्यागेतासांप्रयोजनमाह
तेनवृषेणप्रियेणपत्या सहक्रीडंतीः खेलंत्यःचरथभ्रमथतेनप्रियेणेतिचसहशब्दाप्रयोगेपिसहार्थयोगे तृतीयाक्री
डंतीरिति [illegible] सोजसिपूर्वसवर्णः वत्सतरीत्यागमप्याहमानइति पूर्वार्द्धस्थितमिहान्वीयतेतस्यविभक्तिविपरिणामेन ए०
प्रथमांतस्य[illegible]त्वयः तेनायमर्थः हेवत्सतर्योयूयमितिनोऽस्माकंमाशब्दोनिषेधार्थः नास्मत्तत्त्वविषयाःयुष्मास्वपिस्वत्वंम १०
यानकृतमितियावत् एतावतावत्सतरीणामप्युत्सर्गप्रतिपादितः उत्सृष्टःफलमाह साध्वजनुषासुभगारायस्पोषेणसमि
षामदेमेति अस्मीहयंरायोधनस्यपोषेणपुष्ट्यासमव्द्यासंमदेमहृष्टाभवेमव्यवहितस्यापिसंशब्दस्यव्यवहिताश्चेतिछंद

सुपसगसद्दृशामदमेतिव्यत्ययेनश्यन्नोभावेशपिरूपंमदीहर्षैइत्यस्यलिङुत्तमपुरुषवहुवचनं इषासंमदेमअन्नेनचसम्मदे
मेत्यर्थः इयती गौतत्त्वइच्छायामिस्यक्तिपितलीयैकवचनेरूपमिषेति धनसमृद्ध्याअन्नेनचसंमदेमेत्यर्थः किंभूतेन
रायस्पोषेणोत्ताचसाप्नुजनुषासप्तेवसाप्ताःसप्तन्शब्दस्यमकारांतस्यस्वार्थकेःणिटिलोपेसाप्नमिति अकारस्ययकारा
देशश्छांदसःजनुशब्दोजन्मवाचीसकारांतःसप्तजनूंषिजन्मानिभावीत्यर्थे तमधीष्टोभृतोभूतोभावीचेति आर्हीयष्ठक्प्र
त्ययाप्यध्यर्द्धपूर्वाद्विगोर्लुगसंज्ञायामितिलुक् ततस्तृतीयैकवचनंसाप्नजनुषासप्तजन्मभाविनेत्यर्थः अतएवदृष्टस्म
तिः हाटकस्मितिगौरीणांसप्तजन्मानुगंफलमिति गौरीशब्देनात्रगौरभिधीयते प्रकरणात् सुभगालोकस्यप्रियाःसंमदेमे
त्यन्वयः एयस्पोषेणेति रैशब्दस्यषष्ठ्यंतस्यछांदसोविसर्जनीयस्यसकारः अन्येचदृष्टपोत्सर्गस्यमंत्राःसंमत्यधीयमानमाध्यं
दिनीयशाखीयाःततस्तत्रनात्यंतिकःसंशयःइतिनविवेचिताः पितृहीनस्यबालस्यनामादिकर्तापितृहीनबालकनिरू
पितमातामहीदिपित्रादिमातामहादीनामाभ्युदयिकश्राद्धंकुर्यात् तथाहिस्वपितृभ्यःपितादद्यात्पुत्रसंस्कारकर्मणि पिण्डा
नोद्वाहमातेषांतस्याभावेतुतत्क्रमादितिवाक्यप्रमाणंतस्यार्थः पुत्रसंस्कारकर्मणिनाम करणात् पिताजनकःस्वपितृ
भ्यःस्वकीयपित्रादिभ्यःपिण्डान्दद्यात् श्राद्धंकुर्यात् पिण्डपदेनश्राद्धोपलक्षणात् आउद्वाहनात् उद्वहनंविवाहमभि
व्याप्यसुतसंस्कारकर्मणितेनविवाहपर्यंतंसुतसंस्कारकर्मइतिपर्यवस्यतितस्याभावेतस्यपितुरभावेतत्क्रमात् पितु
रुपक्रमेणपिण्डान्दद्यादित्यर्थः तथाचयोनामादिकर्तापितृहीनस्यभवतिसपितृहीनपित्रादुपक्रमेणश्राद्धंकुर्यादित्य

श्री० ये: संपद्यते ततश्च पितृहीनं निरूपितपित्रादि बोधनात् तन्निरूपितमात्रादिमातामहादयोपि लभ्यंते तस्येति पदेन पितुरुपस्थानात्
वि० तत्संबंधमात्रत्वेन पुत्रस्योपस्थितौ तेनैव कर्तव्यसंस्कारे पित्रादिनिरूपणं न तु माणवकपित्रा अत एकत्र तेन निरूपणान्मात्रादि
११ पदके मातामहादिपदके च पितृहीनेन पुत्रेणैव निरूपणं तस्योपस्थितत्वात् निरूपकांतराकांक्षानिवृत्तेरुपस्थापकाभावाच्चेति तथा
च तत्र माणवकमातृपितामहीप्रपितामहीनां नांदीमुखीनां माणवकपितृपितामहप्रपितामहानां नांदीमुखानां माणवकमाता
महप्रमातामहवृद्धप्रमातामहानां नांदीमुखानां माणवकनामकरणनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये इति नामगोत्राद्यु
च्चारणपूर्वकं वाक्यं कर्तव्यं भवति एष चार्थः श्रीदत्तोपाध्यायसंमतः तथाहि पितृभक्तिश्राद्धकल्पग्रंथे तैर्लिखितम् अपुत्रस्य
मपि पुंसा नंतरं कुत्र श्राद्धप्राप्तिरित्युक्ता तदीयकन्याविवाहे आभ्युदयिकश्राद्धे तत् प्राप्नोतीति तथा च कन्ययैव तत्र पित्रादि
निरूपणं न तु कन्यापित्रादिनिरूपणमिति स्फुटं यत्र तु पितुरभावो नास्ति क्षतादिना तस्याकर्तृत्वे तत्प्रतिनिधित्वेन तत्पुत्रनामा
दिकर्ता यो भवति स स्वनामकं पितुर्मात्रादि पित्रादिमातामहादीनां श्राद्धं कुर्यात् तस्याभावे तु तत्क्रमादिति वाक्यस्य तत्रानुप
स्थितेः तथा माणवकपितुर्मातृपितामहीप्रपितामहीनां नान्दीमुखीनां माणवकपितुः पितृपितामहप्रपितामहानां नांदीमुखा रा०
नां माणवकपितुर्मातामहप्रमातामहवृद्धप्रमातामहानां नांदीमुखानां माणवकनामकरणनिमित्तकमाभ्युदयिकश्राद्धमहं ११
करिष्ये इति नामगोत्राद्युच्चारणपूर्वकं वाक्यं कर्तव्यम् एवं च पितुरभावे सर्वत्र माणवकेनैव निरूपणम् माणवकपितरि जीव
ति माणवकपितृनिरूपिता एव मात्रादिपित्रादिमातामहादय इति निरंतरं गम्। अशौचांत द्वितीयदिने प्रथमं प्रेतत्वविमुक्तिका

म अद्यादि यथाकालं षोडशश्राद्धमहं करिष्ये इति प्रथमः संकल्पः ततः प्रेतत्वविमुक्तिहेतु षोडशश्राद्धांतर्गताद्यश्राद्धमहं करि
ष्ये इति द्वितीयः संकल्पः यत्र तु एकादशमासाभ्यंतरेऽधिमासपातस्तत्र प्रेतत्वविमुक्तिकाम अद्यादि यथाकालं सप्तदशश्राद्धा
न्यहं करिष्ये इति प्रथमः संकल्पः अत्र च संवत्सराभ्यंतरे यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेदिति
विष्णुवाक्यं प्रमाणं सप्तदशश्राद्धकरणे तथा हि मासिकश्राद्धाधिकरणत्वेनाधिकं दिनमेकं तद्वाक्यं बोधयति तेनाधिकं सप्त
दशश्राद्धं बोधयति तेनैकादशाहानंतरं यत्र द्वादशभिर्दिनैर्द्वादशमासिकानि कृत्वा त्रयोदशेऽह्नि सपिण्डनं कुर्यादिति वि
धिः तत्रैवाधिमाससंभवे एकदिनश्राद्धवृद्ध्या त्रयोदशभिर्दिनैस्त्रयोदशमासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कुर्यादिति
पर्यवसितार्थो भवति एवं च एकादशमासाभ्यंतरेऽधिमासपाते सप्तदशश्राद्धानि कर्तव्यानीत्यायाति तथा च मुख्यपक्षे वर्षस
पिण्डने प्रसक्रमेणैव त्रयोदशसु मासेषु त्रयोदशमासिकानि मरणतिथिसजातीयतिथौ कर्तव्यानीति एकाहोनषाण्मासिके
ऊनषाण्मासिकम् एकाहोनवर्षे ऊनवार्षिकं श्राद्धं कर्तव्यम् द्वादशदिने सपिण्डने प्रथममासिक द्वितीयमासिक तृतीयमा
सिक चतुर्थमासिक पञ्चममासिक षष्ठमासिक सप्तममासिकाऽष्टममासिक नवममासिक दशममासिकैकादशमासि
क द्वादशमासिकोनवार्षिक त्रयोदशमासिकानि अनुक्रमेणैकस्मिन्दिने कर्तव्यानि त्रिपक्षे सपिण्डने मासे प्रथममासिकं
कृत्वा त्रिपक्षपूरणात्पूर्वदिने द्वितीयमासिकादि त्रयोदशमासिकपर्यंतानि द्वादशमासिकानि कर्तव्यानि त्रिपक्षपूरकमरण
तिथिसजातीयतिथौ वा सपिण्डनदिने एव सर्वाणि कर्तव्यानि षष्ठमासे सपिण्डनपक्षे पंचसु मासेषु पंचमासिकानि मरणति

थिसजातीयतिथौकृत्वाषाण्मासिकपूरणपूर्वदिनेऊनषाण्मासिकादीनिदशमासिकानिकर्तव्यानि षष्ठमासपूरकमरणतिथिस
जातीयतिथौसपिण्डनदिनएववाऊनषाण्मासिकादीनिकर्तव्यानि नवममासेसपिण्डनेऽष्टसुमासेषुषष्ठमासिकानिकर्तव्यानि
एकाहेनषाण्मासिकेऊनषाण्मासिकंकर्तव्यं नवममासपूरणपूर्वदिने नवममासिकादीनिराज्याद्युपद्रवेषाण्मासिकानि
कर्तव्यानि नवममासपूरणमरणतिथिसजातीयतिथौसपिण्डनदिनएववाकर्तव्यानि एकादशाहानंतरंदिनेदिनेएकैकमासि
कश्राद्धकरणेत्रयोदशसुदिनेषुत्रयोदशमासिकानिकर्तव्यानि षष्ठेदिनेमासिकद्वयम् ऊनषाण्मासिकं षष्ठमासिकंचकर्तव्य
म् त्रयोदशेदिनेमासिकद्वयमूनवार्षिकं त्रयोदशमासिकंचकर्तव्यम् चतुर्दशेदिनेसपिण्डनम् शूद्रेणतुत्रयोदशदिनेएवस
पिण्डनंकर्तव्यमितिविशेषः अथचत्रिपक्षादौसपिण्डनपक्षेप्रथममासादौयदिदर्शेशौचमापततितदाशौचापगमेमासिकं
कृत्वाऽग्रिममासादौप्रकृततत्क्रमेणमासिकंकर्तव्यम् सूतकंयद्यापततितदासूतकान्तेमासिकंकृत्वाऽग्रेप्रकृततत्क्रमेणमासि
कंकर्तव्यम् यदिराष्ट्राद्युपद्रवरूपविघ्नेनदिनविस्मरणादिनावास्वयाहाज्ञानेनश्राद्धंनकृतम् तदाएकादश्यांपतितमासि
कानिकृत्वाऽग्रेप्रकृततत्क्रमेणमासिकंकर्तव्यं मासिकस्यैकोद्दिष्टरूपत्वात् एकोद्दिष्टस्यकर्तव्यतायांश्राद्धविघ्नेसमुत्पन्ने
क्षयाहेविदितेतथा एकादश्यांप्रकुर्वीतकृष्णपक्षेविशेषतइति वाक्यंप्रमाणं सूतकाशौचयोरपि तदनंतरकालकर्तव्यत्वं १२
बोधितमेकोद्दिष्टस्येति अग्रिममासिकेपतितंमासिकंक्रियते इतिजघन्यः पक्षः प्रमाणाभावात् केचित्तुप्रथममासिक
श्राद्धाकरणेअपर्याप्ताहत्तुंमतीतिवाक्येनमासद्वयांतेमासिकद्वयंकर्तव्यम् एवंमत्यातुमासिकद्वयंकर्तव्यमित्ययमेवक्रमः

तत्र च वाक्यबलेन तृतीयपक्षे तौ पूर्वदिने ऊनषाण्मासिकं तु पूर्तौ पंचममासिकषष्ठमासिके कर्तव्ये एवं च षष्ठपक्षे तु पूर्वदिन
ऊनवार्षिकं षष्ठपक्षे तौ एकादशमासिकद्वादशमासिके कर्तव्ये यत्र तु द्वादश एव दिने सपिण्डनकर्तव्यतायां प्रथममासि
कादौ कृत आशौचान्ताद्दिनात्सपिण्डनबाधस्तत्र कृतमासिकादेरकिंचित्करत्वम् तद्दिनसपिण्डनक्रियोपाधिकर्तव्यतया सपि
ण्डनासंभवे कृतमासिकानामयथाकालकृतत्वेनाकृतकल्पत्वात् एकाहादिकर्तव्यसपिण्डनक्रियाकल्पे तु प्रथमगृहीतक
ल्पस्यानिर्वाहे कल्पान्तरं नाश्रीयत इति मतमनादेयं प्रेतत्वविमुक्तिहेतुत्वेन सपिण्डनक्रियाया अवश्यकर्तव्यत्वेन बाधक
न्यायान्तरानवकाशादिति अथावश्यकश्राद्धकालाः तत्र विष्णुः अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रोष्ठपद्यूर्ध्वं
कृष्णत्रयोदशी व्रीहियवपाकौ चेति एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते अ
मावास्येत्यनेन केवलाया अमावास्याया विधानादमावास्यामात्रे निरग्नीनामावश्यकश्राद्धकाल इति प्रतिपादितम् तेना
ग्निमतामिन्दुक्षयो निमित्तान्तरम् तत्र तेषामिन्दुक्षयापेक्षया न व्यवस्थापकानि बहूनि वाक्यानि तत्रोपयुक्तानि अमावास्यायां
तु यस्मिन्दिनेऽपराह्णेऽमावास्यालाभस्तस्मिन्नेव दिने श्राद्धं उभयदिने त्वपराह्णेऽमावास्यालाभे प्रथमदिने श्राद्धं प्रथममात्रा
त्यागस्यान्याय्यत्वात् उभयदिने त्वपराह्णेऽमावास्याया —— अलाभे उत्तरदिने मध्याह्नेऽपि श्राद्धं कर्तव्यं मुख्यकालालाभात् अवि
शेषान्मलमासामावास्यायामप्यावश्यकश्राद्धं कर्तव्यम् तिस्रोऽष्टका इति पौषमाघफाल्गुनकृष्णाष्टम्यः तासु चापूपमांसशा
कानि श्राद्धद्रव्याणि तत्रापूपस्यान्नरूपतया तस्यैव तत्र प्रशस्ततया मुख्यत्वं मांसशाकयोस्तु उपकरणत्वेनान्वयो यथासंख्य

न्या॰ मष्टकाद्ये मुख्यद्रव्यमोदनादिकमेव अत्र पारस्करगृह्यम् ॥ ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्या अ
वि॰ पूपमांसशाकैर्यथासंख्यम् अत्रापि स्पष्टं यथासंख्यं पित्र्यापीत्यनेन चतुर्थी अष्टका विधीयते तत्रापि शाकमुपकरणम् वर्षासु मघा
१२ शाकैश्च चतुर्थ्यामेव सर्वदा वर्षासु मघाऽपरपक्षस्य भाद्रकृष्णपक्षत्वात्तदष्टम्या वर्षामध्यत्वं शाकैरिति तस्यां ब्रह्मपुराणेन शा
कोपकरणविधानात् ॥ एवं च स्वातन्त्र्येणाप्याश्विनकृष्णाष्टम्यामष्टकात्वेन श्राद्धविधानात्तस्मिन्पक्षे दिनान्तरे श्राद्धसंभवेऽप्यष्ट
म्याः स्वातन्त्र्येण निमित्तत्वमिति प्रतिपादितम् ॥ अत एव च तत्र घृतपूपमांसशाकासंपत्तौ द्रव्यान्तरेणापि श्राद्धकरणमुक्तं श्राद्ध
स्यानित्यत्वादिति प्रतिभाति ॥ अन्वष्टकास्तु सा ग्नीनामावश्यकश्राद्धकालः अन्वष्टकाश्राद्धविधाने सा ग्निकर्तृकत्वलिङ्गदर्श
नादिति ॥ माघी माघयुक्ता माघपूर्णिमा तत्रैव माघीशब्दस्य व्युत्पत्तिसिद्धत्वात् अत्रान्वष्टकास्त्विह साग्नीनामावश्यकश्राद्ध
कालः अपरः साग्नि निरग्निसाधारण आवश्यकश्राद्धकालः प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी अपरपक्षीया एतावताऽऽश्विनकृष्णपक्ष
स्यैव — नित्यकालत्वेन तत्र दिनान्तर आशौचादिना श्राद्धबाधे पित्र्योदश्यामावश्यकं श्राद्धकरणमित्युक्तं भवति व्रीहियवपा
कौ चेति शरद्वसन्ते च व्रीहियवाभ्यामावश्यकं श्राद्धं तत्र च नवव्रीहियवयोरसंपत्तौ पुराणाभ्यां व्रीहियवाभ्यां तत्र श्राद्धं कर्तव्यं तद श्रा॰
भावे द्रव्यान्तरेणापि श्राद्धं कर्तव्यमिति तथा च नवप्राशनकर्मप्रस्तावे गोभिलगृह्यभाष्ये ॥ हेमे धी व्रीहियवाभ्यां शरद्वसन्तयोर्य १२
जेत् श्यामाकैर्वेणी वर्षासु आपत्कालेऽन्येन पुराणेवेति वचनात् अत्र नवनीवानप्रस्थद्वयर्थः यद्यप्यत्र यागे विधानं तथापि श्राद्धे
पि चाकांक्षायास्तुल्यत्वात्तदसंपत्तौ पुराणव्रीहियवविधिरन्यद्रव्यविधिश्चोपतिष्ठत एव च सिद्धः श्रावण्याग्रहायण्योरष्टका

सुच पितृभ्यो दद्यात् श्रावण्याग्रहायण्योः श्रावणपूर्णिमामार्गशीर्षपूर्णिमे श्रवणमृगशिरोयुक्ते एतयोर्निरग्नीनामप्यावश्यकं
श्राद्धकरणं विशेषाः श्रवणात्॥ एतच्च श्राद्धकल्पे श्राद्धपंज्यां च सुव्यक्तम् अष्टकाः कथिता एव [illegible] मनुः अश्वयुक्कृष्ण
पक्षे तु श्राद्धं दद्यात् दिने दिने त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा दिने दिने प्रतिदिनमित्यर्थः एवं चापरपक्षीय दिनत्वेन विधा
नात्तस्मिन्पक्षे दिनपुरस्कारेण श्राद्धस्य प्रतिदिनकर्तव्यत्वं बोधितम् तथा चापरपक्षे सर्वेषु दिनेष्वपराह्णकाले श्राद्धं कर्तव्यम् तत्र
न तिथिविशेषजिज्ञासेति तिथिविशेषकथितं फलं तत्रापि भवत्येव श्राद्धस्य वस्तुतस्तत्तिथ्यवच्छिन्नकालिकत्वात् दिनपुर
स्कारेणैव श्राद्धकरणे कन्यागते सवितरि यान्यहानि तु षोडश क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयमिति वाक्ये ऽह्नां षोडश
त्वं संगच्छते तिथिद्वयापरपक्षस्य षोडशदिनात्मकत्वसंभवात् एवं च त्रयोदश्याममावास्यायां चाग्रिमदिने ऽपराह्णकाललाभेपि
निषिद्धप्रातर्मुहूर्तद्वयातिरिक्तकाले कृतं तदुभयतिथ्यवच्छिन्नकालश्राद्धेनापि कर्त्रा श्राद्धं कर्तव्यं दिनत्वेन श्राद्धकरणपुरस्कारा
त्सर्वस्मिन् दिने तत्तन्निमित्तक मेव श्राद्धमायाति दिने दिने तु तस्यां तिथौ तिथौ इति व्याख्याने प्रथमं दिनशब्दस्य मुख्यार्थत्याग
एकस्मिन्दिने श्राद्धयोग्यतिथिद्वयप्राप्तौ पार्वणद्वयप्रसंगः एकस्मिन्दिने यस्यां तिथौ श्राद्धं कृतं तस्यां तिथौ दिनांतरे श्राद्धकालप्राप्तौ
श्राद्धानाचरणं तत्तिथ्यवच्छेदेन श्राद्धस्य कृतत्वात् एतदुभयं च न सर्वप्रामाणिकव्यवहारसिद्धमिति दिने दिन इति मुख्य शब्दा
र्थपरिग्रह एव युक्तः त्रिभागहीनं पक्षमिति तृतीयभागहीनस्य पक्षस्य विधानात् तत्र पंचमीप्रभृति श्राद्धविधानम् त्रिभागमि
ति तृतीयभागमारभ्य दशमीप्रभृतीत्यर्थः अर्द्धमेवेति पक्षार्द्धविधानमष्टमीप्रभृतीत्यर्थः अत्र च पक्षे कल्पचतुष्टयेपि चतु

र्द्दशीत्यागः पार्वणश्राद्धे कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्द्दशीं श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा इति मनुना चतुर्द्दशीपार्व
णश्राद्धस्य निषेधात् त्रयोदशीश्राद्धेऽपि यद्यपि निंदा श्रूयते तथापि निंदायाः काम्यश्राद्धविषयत्वात् अश्वयुक्कृष्णपक्षीयदिन
त्वमात्रस्यावश्यकत्वं तस्य नित्यत्वादिति त्रयोदशीश्राद्धं कर्तव्यमिति बहुप्रामाणिकव्यवस्थानेच्छेत्त्रयोदशीश्राद्धं पुनर्वान्यः सुतायु
ष इत्यादि निषेधवाक्यमलौकिकमिति रत्नाकरः चतुर्द्दश्यां शस्त्रादिहतस्यैकोद्दिष्टविधिना श्राद्धम् अत्र प्रायोऽनशनशस्त्राग्नि
विषोद्बन्धनिनां तथा चतुर्दश्यां श्राद्धं कर्तव्यं तत्प्रार्थमिति निश्चय इत्यादि ब्रह्मपुराणादिवाक्ये युरोगेतरनिमित्तेन मृतानां चतु
र्द्दश्यां श्राद्धं कर्तव्यमिति तात्पर्यमाचारानुरोधात् तेन स्त्रिया अपि प्रसवेन मृतायाश्चतुर्दश्यामेकोद्दिष्टं वायुपुराणे, युवानस्तु ग
हे यस्य मृतास्तेषां तु दापयेत् शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम् गृह इत्युपलक्षणम् तेन युवदशापायत्रकुत्रापि मृतानां
पित्रादीनां श्राद्धं चतुर्दश्यां कर्तव्यं शस्त्रहतानां च श्राद्धं कर्तव्यमित्यर्थः युवमरणे तु युवदशामृतत्वमेव प्रयोजकं न तु रोगेतरनिमि
त्तमृतत्वं हेतुविशेषानभिधानात् युवेतराणां रोगेतरनिमित्तत्वं प्रयोजकम् अत एव युवेतरस्यानुपसर्गहेतुकमरणे चतुर्दश्यां
न श्राद्धं रोगनिमित्तमृतत्वात् एतच्च श्राद्धमेकोद्दिष्टविधिनाऽऽचारात् चतुर्दश्यां तु यच्छ्राद्धं सपिंडीकरणे कृते तदेकोद्दिष्टवि
धिना कर्तव्यं शस्त्रघातिनामिति गौडवाक्यदर्शनाच्च शस्त्रघात एषामस्तीति शस्त्रघातिनः शस्त्रादिहतास्तेषामित्यर्थः स्त्री
णामप्येतदेकोद्दिष्टं पुंस्त्वस्याविवक्षितत्वादिति अत्र च शस्त्रादिनिमित्तमृतानां युवमृतानां च चतुर्दशीश्राद्धसमये बोधित
इति शस्त्रघातादिनामृतस्यैतद्दिनश्राद्धभागित्वबोधने तात्पर्यात् एकोद्दिष्टश्राद्धसंकल्पवाक्ये तन्निमित्तकमरणोल्लेखो

नप्रयोजकः वस्तुतः सतामेव निमित्तानामेतच्चतुर्दशीश्राद्धनिमित्तत्वात् तथाचाऽऽश्विनकृष्णचतुर्दश्याममुकगोत्रस्य पितुर
मुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्ये इत्येवं संकल्पः कर्तव्यः युवानस्त्वत्र षोडशवर्षवयस्का आरभ्य त्रिंशद्वर्षपर्यंता विवक्षिता इति
रत्नाकरप्रभृति निबंधः अत्र पक्षे प्रतिपदादितिथिषु फलानि च नानाविधानि नानास्मृतिषु कथितानि तेषु पुरुषमात्रकामना
विषयकफलानि निष्कृष्य लिख्यंते तद्यथा प्रतिपदि धनलाभलब्धाविनाशफलम् द्वितीयायां द्विपदाधिपत्यं तृतीयायां सर्व
कामप्राप्तिः चतुर्थ्यां मापद्राप्राप्तिः पंचम्यां महालक्ष्मीः षष्ठ्यां द्विजकर्तृकपूजनं सप्तम्यां गणाधिपत्यम् अष्टम्यां संपूर्णा बुद्धिसि
द्धिः नवम्यां स्त्रीविषयकैश्वर्यम् दशम्यां बहुगोजातीयलाभः एकादश्यां बहुब्रह्मवर्चस्विपुत्राः द्वादश्यां सुवर्णरजतम् त्रयोद
श्यां ज्ञातिश्रैष्ठ्यम् चतुर्दश्यां भूतिः अमावास्यां प्रतिपदादितिथ्युक्तसर्वफलानि अत्र च नित्यत्वपुरस्कारेणापि सर्वदिन क्रि
यमाणश्राद्धेषु तत्तत्तिथिप्राप्तौ तत्तत्फलप्राप्तिरपि भवतीति प्रतिभाति संध्यावंदनस्येव संध्यावंदनादि देशकरणे कथितफलयो
गात् गंगातीरादिकृतावश्यकश्राद्धवच्चेति आश्विनकृष्णपक्षे केवलायास्त्रयोदश्याः पार्वणश्राद्धं प्रति निमित्तत्वमुक्तं विष्णुना
प्रोष्ठपद्यूर्ध्वं कृष्णत्रयोदशीत्यनेन केवलायां मघाया निमित्तत्वमुक्तं देवीपुराणे तत्रापि महती पूजा कर्तव्या पितृदैवते ऋक्षे
पिंडप्रदानं तु ज्येष्ठपुत्री विवर्जयेदित्यनेन पितृदैवतऋक्षे मघायामित्यर्थः मघात्रयोदश्योर्मिलितयोरपि निमित्तत्वमुक्तं बहु
भिः तत्र शंखः प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् प्राप्य श्राद्धं हि कर्तव्यं मधुना पायसेन च श्रीमहाभारते अपि नः स कुले
जायाद्यो नो दद्यात्त्रयोदशीम् मघायां सर्पिषा युक्तं पायसं दक्षिणायने मनुः यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशी तदप्यक्षय

श्रा० मेवस्याद्वर्षासुचमघासुच वसिष्ठः॥पितापितामहश्चैवतथैवप्रपितामहः उपासतेसुतंजातंशकुंताइवपिप्पलम् मधुमांसैश्च शाकैश्च
वि० पयसापायसेनच एषनोदास्यतिश्राद्धंवर्षासुचमघासुच ब्रह्मपुराणे आश्वयुज्यांतुकृष्णायांत्रयोदश्यांमघासुच प्रावृट्कृतौयमःप्रे
१५ तान्पितॄंश्चापियमालयात् विसर्ज्जयतिमानुष्येकृत्वाशून्यंस्वकंपुरं क्षुधार्त्ताःकीर्तयंतश्चदुष्कृतंतुस्वयंकृतम् पायसंपुत्र
पौत्रेभ्यःकांक्षंतोमधुसंयुतम् तस्मात्तांस्तत्रविधिनातर्पयेत्पायसेनच मध्वाज्यतिलमिश्रेणतथाशीतेनचांभसा ग्रासमात्रंप
रगृहाद्धृत्वंयःप्राप्नुयान्नरः भिक्षामात्रेणयःप्राणान्संधारयतिवास्वयम् योवासंवर्द्धयेद्देहंप्रत्यहंस्वात्मविक्रयात् श्राद्धंतेना
पिकर्तव्यंतैस्तैर्द्रव्यैःसुसंचितैः त्रयोदश्यांप्रयत्नेनवर्षासुचमघासुच नस्यात्परतरःकालःश्राद्धेष्वन्यत्रविद्यते यत्रसाक्षाद्धि
पितरोगृह्णंत्यमृतमक्षयं आश्वयुज्यामिति त्रयोदश्यामित्यस्यविशेषणं तेनाश्विनकृष्णत्रयोदश्यामित्यर्थः प्रावृट्कृतौवर्षर्तौ
वित्यर्थः शुक्लादिमासरीत्याऽपरपक्षस्यभाद्रपदांतर्गतत्वाद्वर्षर्तुत्वम् अत्रतत्तद्द्रव्यविधानंश्राद्धस्यावश्यककर्तव्यत्वविधान
म् फलप्रकर्षविधानंचमघात्रयोदश्योर्मिलितयोः मिलितयोर्मघात्रयोदश्योः सूर्य्यस्यहस्तनक्षत्रावस्थितौतृतीयंनिमित्तं
तस्यगजच्छायेतिनाम तथाच ब्रह्मपुराणं योगोमघात्रयोदश्योःकुंजरच्छायसंज्ञकः भवेन्मघायांसंस्थेच शशिन्यर्केकरे ए०
स्थिते तत्रच श्राद्धमावश्यकम् तत्रयाज्ञवल्क्यः व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः श्राद्धंप्रतिरुचिश्चैवश्राद्ध १५
कालाःप्रकीर्तिताः व्यतीपातोज्योतिषशास्त्रप्रसिद्धः सूर्यचंद्रमसोःक्रांतिसाम्यसमयःपुण्यकालविशेषः अत्रचगजच्छा
यायाश्चन्द्रसूर्यग्रहणस्यचावश्यकश्राद्धकालत्वं अत्रकेवलायांत्रयोदश्यांमिलितयोर्मघात्रयोदश्योर्गजच्छायायांचसपु

त्रापुत्रयोरप्यधिकारः।पिंडवर्जमेव श्राद्धे पुत्रिण आवश्यकश्राद्धनिषेधात् नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषे इत्यादिनिषे
धवाक्यममौलिकमिति रत्नाकरलिखनात् पुत्रवतोपि त्रयोदशीश्राद्धाधिकारः केवलायांमघायांपुत्रवता श्राद्धं पिण्डरहि
तं कर्तव्यमिति विशेषः गजच्छायायां योगो यावत्कालमवतिष्ठते तावत्कालपर्यन्तं ब्राह्मणेन भोजनं न कर्तव्यम् तथा ब्रह्म
पुराणे सूतके मृतके चापि ग्रस्ते चंद्रसूर्ययोः छायायां कुंजरस्याथ भुक्त्वा तु नरकं व्रजेत् भुक्त्वा प्रमादाद्विप्रस्तु सम्यक् चां।
द्रायणं चरेत् प्राक्छाये कुंजरस्य चेति याज्ञवल्क्यवाक्ये श्राद्धं प्रतिनिमित्तांतरमेवोक्तम् पारस्करः श्रद्धान्वितः श्राद्धं कुर्या
त् शाकेनापि नापरपक्षमतिक्रामेत् एतत्पक्षीयश्राद्धस्याक्षय्यफलत्वमपि तस्मिन्पक्षे कल्पचतुष्टये प्रथमपक्षाद्युपक्रमे।
ण श्राद्धारम्भे क्ते तत्र विप्रैहत्तेः त्रिमकल्पो नानुसरणीय इति मतमनादेयम् नित्यत्वे कल्पांतरे वा धकन्यापानवतारादि।
ति एतस्मिन्पक्षे श्राद्धकरणाभावे कार्तिकामावास्यायामितोप्यावश्यकं श्राद्धं देयं दीपान्विता राजन्ख्याता पंचदशी भुवि त
स्यां दद्यान्न चेद्दत्तं पितॄणां तु महालये इति वाक्यात् महालये पितॄणामुत्तवाश्रये ऽपरपक्षे इत्यर्थः शातातपः सर्वस्वेनापि क
र्तव्यं श्राद्धं वै राहुदर्शने अकुर्वाणस्तु तच्छ्राद्धं पंके गौरिव सीदति राहुदर्शने दत्तं हि श्राद्धमाचंद्रतारकमिति नवोदकेन वा।
स्ते च गृहप्रच्छादने तथा पितरः स्पृहयंत्यन्नमष्टकासु मघासु च तस्माद्द्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च नवोदक इति
वर्षोपक्रमेण जलसंभवे इत्यर्थः सदाचारादार्द्रानक्षत्रावस्थितसूर्यावच्छिन्नसमय इत्यर्थः नवान्न इति शरदि वसंते च इ
ति प्राञ्चः गृहप्रच्छादन इति गृहोपरि तृणेनाच्छादनमेतत्पार्वणश्राद्धनिमित्तं गृहप्रवेशस्त्वाभ्युदयिकश्राद्धनिमित्तं प्रवेशे

नेववेक्ष्मनइतिवाक्येन विहितं तीर्थश्राद्धेतिनिमित्तकं पूर्वकथितं अत्रचनवान्नभक्षणं निमित्तंचपार्वणश्राद्धस्यज्योतिषेप्र
तिपादितं तत्रैचपितृदेवेभ्योऽदत्वानवान्नभक्षणं निषिद्धमिति नवान्नभक्षणपूर्वकालेआवश्यकंश्राद्धं यद्यपिनवानिना
नाविधान्यन्नानिभवन्ति तथापिगृह्येनवान्नप्राशननिमित्तकनवान्नप्राशनकर्मकथनेगृह्यभाष्येच गृहमेधीव्रीहियवा
भ्यांशरद्वसंतयोर्यजेत् श्यामाकै र्वेनीवर्षासु इतिलिखितेनवाक्येनषष्टिक यवश्यामाकरूपान्नसंभवकालएवनिय
मितः तत्रश्यामाकोत्पत्तिर्वानप्रस्थानांश्राद्धकालः गृहस्थानांयवव्रीहिप्राशनपरंश्राद्धकालः यद्यपिनवान्नप्राशनकर्म
णिदृष्टैर्विधानं तथाप्याकांक्षातुल्यतयाश्राद्धेपितदुभयमेवनिमित्तमिति तत्रषष्टिकव्रीहिभक्षणनिमित्तकंशरदियवा
वान्नभक्षणनिमित्तकं वसंतेहेमंतेहैमंतिकनवान्नभक्षणनिमित्तंज्योतिषानुसारात् तथाहिज्योतिषेभोजराजः वृश्चिके
पूर्वभागेतुनवान्नंशस्यतेबुधैः उत्तरेक्रियमाणंतु धनुष्येवकृतंभवेत् धनुषियत्कृतंश्राद्धंपितॄणांनोपतिष्ठते पूर्वभागोऽ
त्रवृश्चिकनवांशकरूपकआचारात् धनुषियत्कृतंश्राद्धं हेमनीषुनिशासुच पितरस्तन्नगृह्णंतिनवान्नामिषकांक्षि
णः शुक्लेपक्षेनवंधान्यंपक्वंज्ञात्वासुशोभनं सुतिथौसुमुहूर्तेचनवान्नफलभक्षणं त्रिजन्मसुत्रयोदश्यांनंदायांपितृभेपि
वा श्राद्धंशुक्रदिनेनैवकार्यंसंततिमिच्छता चैत्रेपौषेकृष्णपक्षेनवान्नंवर्ज्जयेत्तदा भवेज्जन्मांतरेरोगीपितॄणांनोपति
ष्ठते अत्रचैत्रपौषयोर्निषेधात् वृश्चिकेनवान्नभक्षणासंभवेमाघादौश्राद्धपूर्वकंनवान्नभक्षणंयुज्यतएवेति चैत्रेनवा
न्नभक्षणनिषेधादर्थाद्य वेपिनवान्नभक्षणं निमित्तंयवपाकात्पृथक् श्राद्धमायाति वायुपुराणे शुक्लपक्षस्यपूर्वाह्णे

श्राद्धं कुर्याद्विचक्षणः कृष्णपक्षापराह्णे तु रौहिणं तु न लंघयेत् अत्र रौहिणं न लंघयेदिति कृष्णपक्षशुक्लपक्षयोः श्राद्धे रौ
हिणं पूर्वापरसीमा तेन शुक्लपक्षश्राद्धे त्ववसानसीमा रौहिणं तदनंतरं न कर्तव्यमित्यर्थः कृष्णपक्षे श्राद्धारंभसीमा रौहिणं
तदन्वारंभणीयमित्यर्थः ब्रह्मपुराणे पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकं एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकं मातृ
कश्राद्धमन्वष्टका श्राद्धं पूर्वाह्णे अत्रापराह्णे पैतृकं कृष्णपक्षापराह्णे शुक्लपक्षे पूर्वाह्णविधानात् वृद्धिनिमित्तकमाभ्युद
यिकमित्यर्थः मत्स्यपुराणे प्रातःकालो मुहूर्तांस्त्रीन् संगवस्तावदेव तु मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् सायाह्नस्त्रि
मुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु अह्नो मुहूर्ता विख्याता दश पंच च सर्वदा तत्राष्टमो
मुहूर्तो यः स कालः कुतपः स्मृतः मध्याह्ने सर्वदा यस्मान्मंदी भवति भास्करः तस्मादनंतफलदस्तत्रारंभो विशिष्यते मुहू
र्तात्कुतपाद्यन्मुहूर्तचतुष्टयं मुहूर्तपंचकं चैव स्वधावाचनमिष्यते अत्र सर्ववाक्यैकवाक्यतयाऽयमर्थः पंचधा विभ
क्तस्य पंचदशमुहूर्तात्मकस्य दिवसस्य प्रातःकालादयः पंच भागास्तेषामाभ्युदयिकादिश्राद्धचतुष्टयं चतुर्षु भागेषु प्रश
स्ततमम् सति संभवे तन्नैव कर्तव्यम् यदा तु प्रशस्तमध्याह्नादिकाललाभ एकोद्दिष्टादेर्न भवति तदा निषिद्धसंगवादि
कालेषु एकोद्दिष्टादिकं कर्तव्यमिति ॥ अतएव पार्वणेऽपि अपरपक्षादावपराह्णाऽलाभे संगवादिष्वपि कर्तव्यता निषि
द्धकाले सर्वेषामनाचरणम् तदर्थं विवेचयति ऊर्ध्वं मुहूर्तादिति कुतपादूर्ध्वं मुहूर्तचतुष्टयं मुहूर्तपंचकं च कुतपा
त्पूर्वमर्थात् एकं मुहूर्तं कुतप एवं सतन्मुहूर्तदशकं स्वधावाचनमिष्यते स्वधा वाच्यतेऽनेनेति स्वधावाचनम् श्राद्धयोग्य

स्यर्थः॥ प्रातर्मुहूर्तद्वयं सायाह्ने मुहूर्तत्रयमिति मुहूर्तपंचकं सर्वश्राद्धेषु निषिद्धम् मनुः रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते अचिरोदिते इति द्विवोपक्रम मुहूर्तद्वयमित्यर्थः विष्णुः संध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् स्नानं दानं तथा श्राद्धमनंतं राहुदर्शने आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् एतेनान्यत्रापि तात्कालिकश्राद्धनिमित्ते पुत्रजन्मादौ सति सर्वदैव श्राद्धं कर्तव्यमित्युक्तं भवति एवं चानन्यैरावश्यकश्राद्धनिमित्तानि अमावास्याः सर्वाः चतस्रोऽष्टकाः माघी श्रावण्याग्रहायण्यः पूर्णिमास्तिस्रः आश्विनकृष्णपक्षस्तत्स्थी यत्र योदशीगजच्छाया चंद्रसूर्यग्रहणं व्रीहियवपाकौ तीर्थप्राप्तिः आर्द्रानक्षत्रावस्थितिः सूर्यस्य नवान्नभक्षणं आभ्युदयिकश्राद्धनिमित्तानि च एषु श्राद्धमावश्यकं अकरणेऽनिष्टोपदेशादिति श्राद्धे प्रशस्तो देशो गंगातीरादिः निषिद्धस्तु देशः महानद्युत्तरं मगधदक्षिणद्वादशयोजनावच्छिन्नत्रिशंकुदेशः कलिंगदेशः म्लेच्छदेशः शकेरादिसंकीर्णदेशः श्राद्धे प्रशस्तब्राह्मणाः त्रिदण्डी यतिः आत्मवित् वेदवित् वेदांगवित् वानप्रस्थः ब्रह्मचारी असगोत्रः साधुगृहस्थः याज्ञिकः पुराणवेत्ता श्राद्धकर्मवित् विष्णुशिवसूर्यान्यतमभक्तः असमानप्रवरः पितृभक्तः श्वशुरः दौहित्रः गुरुः आचार्यः जामाता ऋत्विक् मातृष्वस्रेयः पितृष्वस्रेयः मातामहः मातुलः भागिनेयः अष्टवर्षपरिणीतासुतापंक्तिपावनः गायत्रीमात्रसारोपि सदाचारः अथ श्राद्धे निषिद्धब्राह्मणाः आमंत्रयेदित्यनुवृत्तौ कात्यायनः हीनांगमुक्तविक्लिधिश्यावदंतविद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जमिति हीनांगो दुश्चर्मा शुक्लो नातिगौरः विक्लिधिर्विचर्चिकायुक्तः शुक्लविक्लिधिः शुक्लांडइति स्मृतिरत्नविवेकः

श्यावदंतो जन्मनैव कृष्णदंतः विद्धप्रजननश्छिन्नमेढ्रश्चर्मी स्वं मित्रं शत्रुः मूर्खः ग्रामयाजकः देवलकः चिकित्सकः क्रयविक्र
योपजीवी ग्रामप्रेष्यः राजप्रेष्यः गुरुविरोधी नक्षत्रग्रहसूचकः त्यक्ताग्निः वार्द्धुषिकः यक्ष्मी पशुपालकः परिवेत्ता परिवित्तिः
निराकृतिः नर्तनशीलः अवकीर्णी वृषलीपतिः वंध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा अपरा वृषली ज्ञेया कुमारी या रजस्व
ला पीनर्भवः काणः गृहावस्थितव्यभिचारिस्त्रीपतिः शूद्रशिष्यः ॥ अभिशस्तः कुण्डः गोलकः पतिसंसर्गी अव्रती क्लीवः योनि
दोषवान् दिधिषूपतिः पुत्रपाठितः शूद्रापतिः स्त्रीजितः ह्यंगुलातीतकर्णः शिल्पजीवी स्त्रीयाजकः पतितः चक्री डीदुराचारः
ऐन्द्रजालिकः पारदारिकः अजपी मातृत्यागी पितृत्यागी दारत्यागी चटकयोषकः अकृतविवाहः नास्तिकः कृपणः असत्यवा
दीऋणहर्ता सर्वथा केशशून्यशिरस्कः स्त्रीतुल्यवाक्चेष्टः स्वाश्रमविच्युतः पर्याहितः पर्याधाता सोदर्ये तिष्ठति ज्येष्ठे ह्या
ग्न्याधानं करोति हि तयोः पर्याहितो ज्येष्ठः पर्याधाता कनिष्ठकः अभ्युत्सादकः अरण्यदाही आवसथदाही क्षेत्रसस्यदाही
अगारदाही सदाव्यसनशीलः रक्तकेशः नपुंसकभेदाः षण्ढको वातजः षण्ढः क्लीवोप्यथ नपुंसकः कीलकश्चेति षड्धा
यं क्लीवभेदो विभावितः शूद्रयाजकः वांताशी राजकारितपापचिह्नांकितः वेश्यापतिः युद्धाचार्यः स्रोतोभेदकः वृक्षारोप
णशीलः कन्यादूषकः हिंस्रः वृषलवृत्तिः सदायाचकः स्त्रीपदीकूटसाक्षी गणयाजकः सूत्रधारादिः धर्मकृत्ये भग्नोत्साहः ॥
हीनातिरिक्तांगः साहसिकः चौरिकः कपटतुलाव्यवहारी आत्मंभरिः पुंस्त्वोपघाती कृत्याभिचारशीलः दत्तापलायी समय
भेदकः पक्षिघाती मीनघाती सर्पघाती कच्छपघाती नानाजंतुवधासक्तश्च वधबंधोपजीवी शूद्रप्रैष्यः मांसविक्रयी गरदः

श्रा० कुण्डाशी श्येनक्रीडी समुद्रयायी चारणहस्तु पजीवी मद्यपः रसविक्रयी केकरः धनुष्कर्त्ता शरकर्त्ता मित्रध्रुक् द्यूतवृत्तिः भृतकाध्या
वि० पकः भृतकाध्यापितः पित्रा विवदमानः दूतः नित्यं याचकः काण्डपृष्ठः स्वकुलं एष्टतः कृत्वा यो वै परकुलं व्रजेत् तेन दुश्चरितेन
१८ सो काण्डपृष्ठ इति स्मृतः उन्मत्तः गण्डमाली वेदनिंदकः उष्ट्रदमकः गोदमकः दन्तिदमकः श्मश्रुकालेप्यजातश्मश्रुः गलरोगी
छिन्नांगः धर्मविक्रयी अश्वविक्रयी गजविक्रयी गोविक्रयी लवणविक्रयी लाक्षाविक्रयी सोमविक्रयी चामरविक्रयी पूर्वदिने कृत
स्त्रीसंगमः पुत्रिकापतिः रजस्वलास्त्रीकः एककूपोदके ग्रामे संवत्सरवासी अंधः बधिरः पांडुरोगी दण्डाधिकृतः अशुचिः राजहि
ष्टः पुरोहितः अनूढापुत्रः अनूढापुत्रपुत्रः अनूढापतिः अनुपासितसंध्यः अष्टौ पापरोगिणः उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो
मधुमेहो भगंदरो महोदरमश्मरीत्यष्टौ पापरोगाः ॥ अथ श्राद्धे प्रशस्तकुशाः दक्षिणदिगवस्थितदक्षिणावनतगोकर्णदीर्घाः समू
लाग्राहरिताः श्राद्धदिवसे स्वयं प्रातरुत्पाटिताः पिण्डभूस्तरणे उपमूलसकृल्लूनाः श्राद्धकर्त्रे बहुमुष्टिहस्तमिताः योग्यदेशस्थाः
कुशाभावे मुंजश्यामाकदूर्वाकाशवल्वजाः तीक्ष्णरोमाणश्च अथ निषिद्धकुशाः चिताजाताः वर्त्मजाताः यज्ञविनियुक्तास्तरणविनि
युक्तासनविनियुक्तपिण्डविनियुक्तपितृतर्पणविनियुक्ताः मेध्यलिप्ताः नीलीक्षेत्रजातकर्पासक्षेत्रजाताः श्राद्धे तिलाः श्यामाः प्रश ए०
स्ताः श्वेता निषिद्धाः श्राद्धे निषिद्धजलम् दुर्गन्धिजलम् स्वल्पजलाशयजलम् पर्युषितजलम् अशुच्युच्छिष्टस्पृष्टतजलम् ॥ १८
अंत्यजजलाशयजलम् अनुत्सृष्टपरखानितजलाशयजलम् अभोज्यनिपानजलम् पतितादिकारितखातजलम् तर्पणे दर्भ
त्रतिलहेमरजतान्यतमरहितं जलं निषिद्धम् अथ श्राद्धेऽर्घपात्राणि सौवर्णराजतताम्रमयखड्गपात्रमणिमयपात्राणि त्रै

वर्णिकनिर्मितानि पलाशादियज्ञीयवृक्षपात्राणि पत्रपुटकानि च एतान्येव परिवेषणे भोजनार्थे च पात्राणि प्रशस्तानि अथ भोजने
परिवेषणे च निषिद्धानि पात्राणि सीसकमयाऽयोमयपाषाणमयभग्नपात्रस्फुटपात्राणि दैवराजतानि भोजने मृण्मयपात्रम् ॥
अथ श्राद्धे गंधादिपंचकम् तत्र गंधाः श्वेतचंदनागुरुकृष्णागुरुगुडत्वक् कुंकुम कर्पूर पद्मकाष्ठ उशीर कुष्ठ जटामांसी गोहि
रोण सुगंधिद्रव्यमेतत् न तु तुलस्यनुकारी उग्रगन्धोऽहृद्यो दुर्वारः निषिद्धगंधाः कस्तूरी सिल्हकादीनि अथ पुष्पाणि वि
हितानि पद्मनीलोत्पलरक्तोत्पलकुमुदचंपकतिलकतगरयूथिकामाधवीकुन्दकुब्जकनवमालिकासेवतीकल्हारतुलसी
पत्राणि निषिद्धेतरश्वेतपुष्पाणि अथ निषिद्धपुष्पाणि अर्कभाण्डी पीताम्लानकृमिकेशादिदुष्टानि उग्रगंधीनि रक्तवर्णोड्रपु
ष्परक्तकरवीरश्वेतसुगंधिकुसुमेतरकंटकिवृक्षपुष्पचैत्यवृक्षोद्भवपुष्पाणि अथ श्राद्धे धूपद्रव्याणि सघृतगुग्गुलसमधुगुग्गु
लचन्दनाऽगुरु उशीर पद्मकाष्ठ कर्पूर श्रीखण्डाः तदभावे देवदारुसरलाद्यपि अथ निषिद्धधूपाः केवलघृतकेवलगुग्गुलतृण
गुग्गुल उग्रगन्धि अगन्धि अशुचि संवद्धानि प्राणिजं च कस्तूरिकादि दीपे घृतं तिलतैलं च विहितं तदभावे सर्षपादिस्नेहः प्राणि
जस्नेहो दीपे निषिद्धः श्राद्धे वस्त्रम् नवमनंगलग्नम् शुभ्रं सदशं देयम् संपत्तौ सत्यां वासोयुगम् त्रिपटं वा धौतकौशेयकंवलादिदा
नमधिकफलं उपवीतमधिकफलार्थं न त्वावश्यकम् तांबूलादीनि श्रेष्ठतमवस्तूनि गंधदानाद्यवसरे दातव्यानि तांबूलोपकर
णानि पर्णपूगखदिरचूर्णखदिरसार कर्पूर श्रीखण्ड कस्तूरी एलाकंकोललवंग सहकारिद्रव्याणि अन्नकर्पूरादीनि पृथगपि दे
यानि अथ श्राद्धदेशे सन्निधापनीयानि गंडकशृंगपात्रश्वेतरक्तनेपालकंवलकृष्णाजिनगौरसर्षपगौरकृष्णारण्यत्रिविधतिल

त्रिदंडियतिरजताऽक्षतकृष्णच्छागाः एतानि श्राद्धं पुनंति अथ श्राद्धदेशेऽपसारणीयानि काककुक्कुरकुक्कुटविड्वराहविडालवृषल
वृषलीपतिरवंजषण्डाः रजस्वलात्रुटितकर्णीपतितः कुष्ठीव्रणीनास्तिकः भयानकः अशुचिः नग्नः धूर्तः नीलकषायवस्त्रः छि
न्नकर्णः लोहकीसः मलिनांवरः दीर्घरोगी अभिशस्तः ऊनांगः अधिकांगः काणः दासप्रेष्यः मद्यपः भोगिनीपतिः भग्नकुलः अस
तीचंडालः पाषण्डः पर्युषितान्नं एतेऽपसार्याः एतेषां काकादीनामन्यतमदृष्ट्युपहतश्राद्धहविषां त्यागः हविरंतरासंभवे तेषेव
हविःषु मधुयुक्ताभिरद्भिः प्रोक्षणम् तिलगौरसर्षपविकिरणम् कृत्वा तैरेव हविर्भिः श्राद्धं कर्तव्यम् मातृपितृवंशासंदेशौ स्त्रीपा
कादिकर्मानुकूलव्यापारे निषिद्धा अथ श्राद्धे विहितानि हविर्द्रव्याणि तत्र दुग्धदधिघृतानि गव्यानि गव्यं पायसम् तिलतण्डु
लमुद्गसाधितकृसरान्नम् अपूपादिशर्कराक्षीरसंयुक्ताः पृथुकामध्वाक्तलाजाः तिलव्रीहियवाश्चेति शालिसमुत्पन्नधा
न्यं प्रसातिकाप्रसातिकानीवारविशेष इति हलायुधः प्रसातिकामध्यदेशे शाठीलादृतिमसिद्धं धान्यं चतुर्वर्णानामेव श्वेतापीता
रक्ता कृष्णा चेति श्राद्धपल्लवः मगधदेशे प्रसिद्धे यं षष्टिका अन्न आसु धान्यं शुक्लं श्राद्धे प्रयुज्यते ग्राम्याभिरोषधीभिर्मासं प्रीयं
तइति सामान्यतो विधानात् विशेषानिषेधात् किंच छंदोगपरिशिष्टटीकायां शारदं धान्यं षष्टिकादीत्यादिपदेनास्यैव संग्रहः
कृष्णमाषमुद्गगोधूमश्यामाकनीवारकलापकंगुवंशबीजानि अथ मांसानि गंडकमांसं विषाणसमयानुस्थितशृंगच्छाग
मांसं सर्वलोहितच्छागमांसं गोधामांसं हरिणविचित्रहरिणकृष्णहरिणशंवरमृगमेषशशककूर्माऽऽरण्यवराहमांसानि
तित्तिरिलावकवर्तकीशल्लकीकृकरएषां पक्षिणां मांसानि कृकरः करा तइति प्रसिद्धः वाध्रीणसं मांसं त्रिपिवं त्विन्द्रियम्।

क्षीणं श्वेतं वृद्धमजापतिम् वाध्रीणसं तुतं माहुर्याज्ञिकाः पितृकर्मणि कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः स वै वाध्रीणसः प्रो
क्तः इत्येषा नैगमी श्रुतिः छागपक्षिणौ वाध्रीणसौ तयोर्मांसं मंत्रसंस्कृतमांसं यदा छागादिकं पशुमालभ्य मांसमुपादीयते तदा
प्रथमं मंत्रेण पशुप्रोक्षणं कर्तव्यम् मंत्रश्च ॐ पितृभ्यस्त्वा जुष्टं प्रोक्षामि एकोद्दिष्टे तु पित्रे त्वा जुष्टं प्रोक्षामीत्यादिरूपः अना
लंभपक्षे सिंहादिहतमांसादिषु न मंत्रसंस्कारापेक्षेति सिंहव्याघ्रहतहरिणमांसम् लब्धक्रीतच्छागादिमांसम् मस्त्याद्यभिघा
तच्छागादिमांसं अथ मत्स्याः महाशल्करोहितराजीवपाठीनश्वेतशल्का अन्येपि अथ शाकाः कालशाकं च वास्तूकं मूलकं
कृष्णनाडिका वेत्रांकुरं कलापं च पटोलं सार्षपं तथा सूर्यावर्तं सुनिष्पन्नं शाकान्याहुर्मनीषिणः कृष्णनाडिका कृष्णनाडी च
इति श्राद्धपल्लव पंज्योः सूर्यावर्तं हुरहुर इति प्रसिद्धम् सुसिद्धम् सुनिष्पन्नम् अम्लानिकषायपत्रसहसपत्रं चोपत्री इति प्रसिद्धं
जलप्रभवशाकं पटुनाडीशाकं च वाक्यांतरात् अथ फलानि आम्रपनसकदलीनालिकेर आमलकी प्राचीनामलकी पद्म
वीज खर्जूर तिन्दु कर्कटकारिका द्राक्षा कर्मकनारंग कलवल्ली दाडिमः दाडिमी विल्वाऽऽम्रातक लकुच वदरी हय पूगफ
ल पटोल वीजपूरक क्षीरिका त्रपुष परूष शृंगाटक मधूक गंभारि फल पिप्पली मरिच कोविदार जंबूनि यानि फलानि
पक्वानि भक्ष्याणि तान्ययत्नपक्वानि देयानि मधूकपुष्पं कोषकलीर भेदाः तद्विकाराश्च गुडशर्करादयः अन्यान्यपि निषि
द्धेतर स्वादुमधुररसानि कर्कटीप्रभृतीनि श्राद्धे देयानि फलान्ययत्नपक्वानि देयानि अथ कंदाः सूरणः दीर्घमूलकं क
सेरु विशं हिमकार सर्वे शालूकभेदाः आर्द्रकं विदारी विदारीकंद इति प्रसिद्धः ॥ तालमूली शतावरी कंदेषु यथायद

श्रा॰ भ्यवहरणीयंभवति तथाकृत्वादातव्यंतदिति अथव्यंजनसंस्कारः द्रव्याणि हिंगुजीरकधान्यकहरिद्रासुंठीमरिचाऽऽर्द्रकदाडि
वि॰ मोबीजघृततैललवणानिसामुद्रिकसांभरिसैन्धवानितैलंतिलभवंसार्षपंच अत्रचमांसादीनिव्यंजनान्युपकरणानिचामान्न
२० श्राद्धेआमान्येवदातव्यानिसिद्धान्नश्राद्धेसिद्धान्येवदातव्यानीतिश्राद्धपल्लवः सक्तुलाजाचिपिटकदुग्धविकारदधिदुग्धघृतगुड
लड्डुकादिपक्वान्नानिचाग्निसाधितान्यप्यामश्राद्धेदेयानीति श्राद्धपल्लवश्राद्धप्रदीपौ अत्रचकालशाकंमहाशल्काःखड्गलोहामि
षं मधु अनंत्यायैवकल्प्यंतेमुन्यन्नानिचसर्वशः कालशाकंप्रसिद्धम् महाशल्काःरोहितप्रभृतयोमत्स्याःखड्गोगंडकःलोहःसर्व
लोहितश्छागः तयोर्मांसं मधुक्षौद्रंमुन्यन्नानिनीवाराः एतैःश्राद्धमनंतपितृतृप्तिजनकम् शर्कराक्षीरसंयुक्ताःपृथुकानित्यम
क्षयाः एतैःश्राद्धमक्षयपितृतृप्तिजनकम् लाजांश्चमधुसंयुक्तान्सक्तून्शर्करयासहश्राद्धेदद्यात् अत्रविहितद्रव्याणांम
श्राद्धदानेतत्फलेच्छायांसमुच्चयोनतुविकल्पः भक्ष्यंभोज्यंचविविधंमूलानिचफलानिच हृद्यानिचैवमांसानिपानानिसुरभीणि
चउपनेयंसर्वमेतदितिमनुवचनात् ततोन्नंबहुसंस्कारंनैकव्यंजनपानवत् चोष्यंपेयंसमंहृद्यंयथावदुपपादयेदिति देवला
क्याच्चसमुच्चयविधानात् नैकव्यंजनपानवदित्यपि अनेकव्यंजनविधानंनत्वेकव्यंजननिषेधः वाक्यभेदप्रसंगात् तस्मादने ए॰
कव्यंजनस्यप्राशस्त्यं एकव्यंजनस्यानिषेधात् अनेकव्यंजनस्यालाभेऽनिषिद्धत्वादेकमपिव्यंजनमुपादेयमितिविहितद्रव्येषु २०
एकद्रव्यदानेनापिश्राद्धस्वरूपनिर्वाहः अथश्राद्धेविहिताऽनिषिद्धद्रव्याणि पद्मबिल्वहिंगुपिप्पलीशृंगाटकदधिसक्तुश्वे
तसिंविकेमुकमधूकमरिचानि अत्रहिंगुपिप्पलीमरिचानिद्रव्यां — तरसंस्कारार्थंदेयानिकेवलानिनदेयानि परिशिष्टानिवि

हितालाभेदेयानि। अथश्राद्धेनिषिद्धद्रव्याणि। केवलजलंवारद्वयसाधितमुद्गाद्यन्नरूपंद्विस्विन्नंउपभुक्ताग्रभागरूपाग्रावलेहितं ॥
शुष्कं पर्युषितंपरिदग्धं शार्करंकीटपाषाणकेशोपहतंवाग्दुष्टम् भावदुष्टं दुष्टोपहतंश्वासोपहतंवासोवधूतं एतानिविहितद्र
व्याण्यपिनिषिद्धानि विषहतमांसं छद्महतमांसंव्याधिहतमांसं सिंहव्याघ्रेतरतिर्यग्घतंमांसम् मंत्राभोक्षितालब्धपशुमांसम्
महिषीक्षीरंहरिणीक्षीरंमेषीक्षीरउष्ट्रीक्षीरंछागीक्षीरंचमरीक्षीरंएकशफीक्षीराणिप्रशस्तमपिश्राद्धार्थमेमयच्छस्वेतिया
चितदुग्धंउद्धृतसारंचदुग्धंनिषिद्धम्। निषिद्धदुग्धविकाराश्चदध्यादयोपिनिषिद्धाः। दुर्गंधिजलंस्वल्पजलाशयजलंपर्युषि
तजलं अशुचिस्पृष्टजलं अंत्यजजलाशयजलं अप्रतिष्ठितजलाशयजलं याचितजलं। दर्भमंत्रतिलहेमरजतान्यतमरहित
जलं अभोज्यान्ननिखातजलंपतितादिकारितजलाशयजलं शूद्राहृतजलं रात्र्याहृतजलंऊषरलवणंकृतलवणंसौवर्च
लवणं अलवणव्यंजनं। पाकानंतरप्रक्षिप्तलवणव्यंजनं। हस्तदत्तव्यंजनं हस्तमथितद्रव्यंच शूद्रस्पृष्टद्रव्यं अश्रुदुष्टद्रव्यं
छिक्कादुष्टद्रव्यं। रसहीनद्रव्यं। गंधहीनद्रव्यं। पालंकीशाकं श्वेतनाडीकाशाकं। सोहिंजनशाकं। तंडुलीयशाकं तंडुलीयकउरि
स्तयाइतिश्राद्धपल्लवः खचिरीशाकं पिप्पलीशाकं रायीशाकं शेंढीशाकं कुसुंभशाकं तुलसीशाकं शणशाकं मरिचशाकं पोथी
शाकंनाडिकाशाकंनाडीकाफलुयीसूष्मा इतिश्राद्धपल्लवेव्याख्याता फलुयीसूष्मामगधादिदेशेषनयोइरतुल्यतालीरूढा
टोलगतिकूष्मांडम्। अलाबुसिंविसोंधिधिसाढेंताकंमंगिरिणंपिण्डमूलकंवंशकरीरम्। कोद्रवंवनकोद्रवंचणकंवोडा अ
कुठपुलाकधान्यंअतसीगौरमाषः मसूरः लसुनः लोहितवृक्षनिर्यासंपलांडुकठछत्तिकपित्थंकालजंघाकेवलसुंठीकेव

लमरिच केवलहिंगुभवनेठीकरहृदः॥ धत्तूरकं चकवासकः स्थूलकेसुकस्थूलजंबूफलम् कुंभीचांडालाग्निसूतकान्यमेधाग्नि
चितामयः श्राद्धे निषिद्धाः अग्न्यंतराभावेऽपवित्रानेतानग्नीन् क्रमेण सप्तसुस्थानेषु परंपरया प्रज्वाल्य सप्तमस्थाने प्रज्वालितो
ग्निरुपादेयः अत्र च श्राद्धे चतुर्विधानि वस्तूनि भवंति विहितानि विहितनिषिद्धानि अविहिताऽनिषिद्धानि निषिद्धानि वि
हितलाभे तेषामेवोपादानं तदलाभे विहितनिषिद्धानामुपादानं तदलाभेऽविहिताऽनिषिद्धानामुपादानं निषिद्धस्य सर्वथा त्या
गः॥ ॥इति श्राद्धविवेके प्रथमः परिच्छेदः॥१॥ ॥अथाधिकारिनिरूपणम्॥ तत्र मूलवाक्यानि शुद्धिविवेके लिखिता
नि सप्रपंचम् इह विस्तरभयादधिकारिमात्रं सिद्धवल्लिख्यते मृतस्य त्रिविधा क्रिया भवति प्रथमा मध्यमोत्तमा चेति तत्र
दाहमारभ्याशौचांतदिनपर्यंता क्रिया पूर्वा १ एकादशाहादिसपिण्डनांता मध्यमा क्रिया २ सपिंडनानंतरं सांवत्सरिकपार्व
णाभ्युदयिकनित्यश्राद्धादिरूपोत्तरा क्रिया ३ तत्र त्रिविधास्वपि क्रियासु त्रयोदशविधानामपि पुत्राणामधिकारः ते च त्र
योदश पुत्राः औरस १ पुत्रिकापुत्र २ क्षेत्रज ३ कानीन ४ सहोढ ५ गूढोत्पन्न ६ पौनर्भवा ७ ऽपविद्ध ८ दत्तक ९ क्रीत १०
कृत्रिम ११ स्वयमुपगत १२ पारशवाः १३ तेषु मुख्य औरसः तदभावे पुत्रिकापुत्रः ततः पूर्वपूर्वाभावे उत्तरोत्तरोऽधिकारी ते
ष्वपि पूर्वक्रियायां मध्यमक्रियायां च विभक्तानामविभक्तानां वा मध्ये योग्यस्य ज्येष्ठस्यैवाधिकारः तदुक्तं स्मृतिसारे अक्ष
तेपि क्षतेवापि कनिष्ठादिभिरौरसैः सत्र कुत्रापि ज्येष्ठस्याधिकारः प्रेतकर्मणीति तस्य क्षतादिना प्रतिबंधे कनिष्ठस्यापि नि
यतकालकर्तव्यदशाहादिकप्रेतपिण्डादिसपिण्डनांतक्रियास्वप्यधिकारः सपिण्डनोत्तरं सर्वेषां पुत्राणामविशेषेण प्र

थगधिकारउत्तरक्रियासु एषांत्रयोदशविधानांपुत्राणांलक्षणम् शुद्धिविवेकेप्रपंचितं पुत्राभावेपौत्रः पौत्राभावेप्रपौत्रः तद
भावेभार्यातदभावेभ्राताकनीयान् तदभावेज्येष्ठः तदभावेपितातदभावेभ्रातृपुत्रः तदभावेपूर्वक्रियायांमध्यमक्रियायांचसपि
ण्डा अधिकारिणः तदभावेदुहिताऽधिकारिणी तदभावेसकुल्याः तदभावेमातृसपिण्डाः तदभावेमातृसकुल्याः कुलद्वया
भावेमातरः तदभावेयथाकथंचित् परिगृहीताः स्त्रियः तदभावेराजादेशेनधनग्राहकोधिकारी पितृहीनौपौत्रप्रपौत्रौ
सपुत्रयोरपिपितामहप्रपितामहयोः पार्वणश्राद्धेऽधिकारिणौ मृतस्यकन्यायाविवाहेकन्याप्रदाताप्यधिकारी असमाप्त
षड्वर्षस्यमृतस्यपूर्वक्रियामात्रं तत्रभ्रातृपित्रादयोऽधिकारिणः असमाप्तद्विवर्षस्यपूर्वक्रियापिनास्तिकिंतुभूमिनिखनन
मात्रंस्त्रियाअपिद्विवर्षाभ्यंतरेभूमिनिखननमात्रंततऊर्द्ध्वंविवाहात्पूर्वंपूर्वक्रियामात्रं तत्रपिताधिकारी तदभावेभ्रात्रादिः ऊ
ढायास्तुत्रिविधाक्रियातत्रपुत्रोधिकारीतदभावेपतिः तदभावेसपत्नीपुत्रः तदभावेपौत्रः तदभावेप्रपौत्रः तदभावेसपिण्डाः त
दभावेसकुल्याः तदभावेपितृसपिण्डाः सप्तपुरुषावधयः सपिण्डाः दशपुरुषावधयः सकुल्याः शूद्रस्यापरिणीतस्यद्विवर्षादू
र्द्ध्वंपूर्वक्रियामात्रं तत्रभ्रात्रादिरधिकारी परिणीतस्यत्रिविधापिक्रियातत्रपुत्रादिरधिकारीपूर्ववत् केचित्तु असमाप्तषड्वर्ष
स्यत्रैवर्णिकस्यस्त्रीशूद्रयोश्चापरिणीतयोस्त्रिविधापिक्रियाऽनुग्रहादिनानत्वावश्यकीत्याहुरिति श्राद्धकल्पस्मृतिसारौ गुरु
कुलस्थितशिष्यस्यभ्रातृपित्रभावेगुरुरधिकारी गुरोरपिपुत्रपत्नीभ्रातृपितृहीनस्यशिष्यः यजमानस्यान्याभावेऋत्विगिति
संन्यासिनः संन्यासिपुत्राअधिकारिणः संन्यासिपुत्रैः पितुः सांवत्सरिकैकोद्दिष्टपार्वणाभ्युदयिकतीर्थश्राद्धादीनिकर्तव्या

निसामान्यैर्विहितानामेषामेकोद्दिष्टादीनां संन्यासिपुत्रंप्रतिकर्तव्यतानिषेधकप्रमाणाभावात् यत्तु एकोद्दिष्टं न कुर्वीत यतीनां
चैव सर्वदा अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति वाक्यं तत्तु न सांवत्सरिकैकोद्दिष्टश्राद्धनिषेधकं एतद्वाक्यस्य पारिजा
तनिबन्धादिषु सपिण्डीकरणपर्यन्तैकोद्दिष्टप्रकरणे लेखनेन प्रेतोद्देश्यकषोडशश्राद्धनिषेधकत्वव्यवस्थितेः त्रिदंडग्रह
णादेव प्रेतत्वं नैव जायते इत्युपसंहाराच्च एकोद्दिष्टं यतेर्नास्ति त्रिदंडग्रहणादिह सपिण्डीकरणाभावात्पार्वणं श्राद्धमिष्यते
इति शातातपवाक्ये त्रिदंडग्रहणहेतुकसपिण्डीकरणाभावस्यैकोद्दिष्टनिषेधहेतुत्वेनाभिधानाच्च किंचैकोद्दिष्टं जलं पिं
डमशौचं प्रेतसत्क्रियां न कुर्यात् पार्विकादन्यत् ब्रह्मीभूताय भिक्षवे इति दत्तात्रेयवाक्ये वार्षिकैकोद्दिष्टनिषेधानवगमात्कलि
पयानां सांवत्सरिकैकोद्दिष्टाचरणात् कतिपयानामनाचरणस्य प्रकरणान्नैकोद्दिष्टनिषेधानवगममात्रेणान्यथोपपत्ते
र्न सामान्यैकोद्दिष्टनिषेधोऽवगम्यत इति तच्चैकोद्दिष्टं सामान्योक्तैकोद्दिष्टविधिनैव कर्तव्यम् विध्यन्तरानुपदेशात् सर्वैः स्वसं
न्यासिपुत्रैः कर्तव्यं तत्रापि विशेषाश्रवणादिति अत एव पार्वणाभ्युदयिकतीर्थश्राद्धादिकं यतिपुत्रैः कर्तव्यमेवेति श्राद्ध
पल्लवेन लिखितं यतेः सपिण्डीकरणान्ताः क्रियाः सर्वैरेव निषिद्धेति श्रीदत्तोपाध्यायलेखनं स्मृतिसारलेखनं च एकोद्दिष्ट 
कर्तव्यतानिषेधवाक्यस्य प्रेतोद्देश्यकैकोद्दिष्टकर्तव्यतानिषेधपरत्वं सर्वं स्मृतिसारादावप्यवगम्यते संदर्भादिति यत्तु 
ब्राह्मणादिहते ताते पतिते संगवर्जिते व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसाविति वाक्यं तदपि न त्रिदण्डिसंन्यासिपा
र्वणश्राद्धनिषेधकं एतद्वाक्यस्यैकदण्डिसंन्यासिपार्वणश्राद्धनिषेधकत्वात् उशनोवाक्ये तु त्रिदण्डिनां पार्वणविधा

भूमावसिपिण्डं दद्यात् ततः प्रस्रवनेजनदानं ओं अद्यामुकगोत्रपितारमुकप्रेत शिरःपूरकप्रथमपिण्डेऽत्र प्रस्रवनेनिखः
तेमयादीयतेतवोपतिष्ठतामिति पिण्डोपरि पूर्ववद्दद्यात् ततः प्रेतमुद्दिश्य तूष्णीमेव गंधपुष्पधूपदीपोर्णातंतुम गा
ढवहु वस्त्रतांबूलानि पिण्डे मयादीयतेतवोपतिष्ठतामिति पिण्डोपरि पूर्ववद्दद्यात् ततः प्रेतमुद्दिश्य तूष्णीमेव ग
पुष्पधूपदीपोर्णातंतुमयमुद्वहु वस्त्रतांबूलानि पिण्डे दद्यात् ततो यावद्बाष्पं निःसरति तावत्पिण्डाभिमुखस्तिष्ठेत् त
तो पसव्यादिनैव ओं अद्यामुकगोत्र पितरमुकप्रेत एष सतिलतोयांजलिस्ते मयादीयते तवोपतिष्ठतामित्येकं तिलतोयां
जलिं पिण्डोपरि दद्यात् एवं पिण्डसमीपे एव ओं अद्यामुकगोत्र पितर मुकप्रेत इदं तिलतोयपूर्णपात्रं ते मयादीयते ते
पतिष्ठतामित्येकं तिलतोयपात्रं दद्यात् पश्चाज्जले सर्वं क्षिपेत् ततउपलिप्तायां भूमौ माल्यपानीयं दीपं च निधाय ओं तं
मुकगोत्र पितर मुक प्रेत इदं माल्यं ते मयादीयते तवोपतिष्ठतां ओं अद्यामुकगोत्र पितर मुक प्रेत इदं पानीयं ते मया प्र॥
तवोपतिष्ठतां ओं अद्यामुकगोत्र पितर मुक प्रेत एष दीपस्ते मयादीयते तवोपतिष्ठतामिति दद्यात् सायंकाले कुठा
रि प्रेतमुद्दिश्य दशरात्रं त्रिरात्रं वा दीपं दद्यात् रात्रौ गोमयोपलिप्तायां भूमौ त्रिकाष्ठिकासमारोपितमृन्मयपात्रे ल्यादि
क्षीरं च निधाय तत्समीपे माल्यं दीपं च धृत्वा ओं अद्यास्यां रात्रौ अमुकगोत्र पितर मुक प्रेतात्र स्नाहि इदं पिब माह
धेहि अनेन पश्येति निवेदयेत् आकाशाधिकरणक दशरात्रावच्छिन्नप्रेतोद्देश्यक घृतजलदानं सर्वपापक्ष रस्वचि
मविनाशफलम् रात्रौ मृतके सूर्योदये दिवा मृतके नक्षत्रोदये वहिर्भयादौ ब्राह्मणानुमत्याऽर्वागपि वा लप दुर्मतिरि

पश्चिमाः क्रमेण गृहद्वारमागत्य तत्रैव निंबपत्राणि दंतैश्छित्वाचम्य दक्षिणेन पाणिना ॐ शमीपत्रं शमयतु इति शमीं ॐ अश्मेत यत्तीनां
यासमित्यश्मानं ॐ अग्निर्नः शर्म यच्छत्वित्यग्निं स्पृशेत् वृषभच्छागयोर्मध्ये स्थित्वा ज्योगिति मंत्रेण दक्षिणेन पाणिनाद्वाश्चारिजा
त् ततोश्मनि पदन्यासं कृत्वाचम्योदकगोमयगौरसर्षपाग्निदूर्वाप्रवालवृषभान्संस्पृश्य गृहं प्रविशेयुः सतच कुलांतर स्त्रिदंडग्रह
कदाने स्त्रीलिंगेन निर्देशः कर्तव्य इति शेषः इयं च जलदानक्रिया दशमपुरुषपर्यंतं कर्तव्या समानग्रामवासे यावद्वासं संपुष्यते
स्मरेयुस्तावत्पर्यंतेषु श्वश्रुरमातामहमातुलाचार्यशिष्यसहाध्यायिमित्रदुहितृभगिनीभागिनेयराजर्त्विजां तद्धिते विनिलंपिं
म्यमुदकदानं कर्तव्यम् पतितापविद्धसर्वगामिनीहत्यासंकरजातप्रव्रजितात्मत्यागिपाखंडिगर्भभर्तृहंतृसुरापि द्विजस्त्रैनकादि
मुदकक्रियां न कुर्यात् पतितस्य त्वेवमिच्छन् सर्वगामिनी दत्तवेतनां दासीमाहूय सुद्दघटहस्तां ब्रूयात् हे दासि गच्छ मूल्येन ते
लानानय सत्वरम् तोयपूर्णघटं त्वं च सतिलं दक्षिणामुखी उपविष्टा तु वामेन चरणेन ततः क्षिपेत् कीर्तयेत्यातकीसंज्ञां लसं
वेति वदन्मुहुः इत्युक्ता चैव सा दासी मृताहनि पातकीसंज्ञां कीर्तयित्वा अमुकप्रेत त्वं पिबेति पुनः पुनरभिधाय वामपादेनाह
त्य पूर्णं सतिलं घटमपवर्ज्जयेत् तत उदकदानानंतरमुदकोत्तीर्णान् कृतवस्त्रांतरपरिधानानाचांतान् पुत्रादीन् सुचिशाद्वद
देशे उपविष्टान् नायं प्रसंतसंवासः कस्यचित्केनचित्सह अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैरित्यादि महाभारतादिषु
क्यानि श्रावयित्वा ऽपनीतशोकान्बंधुजनाः कुर्युः ततः पुत्रादिर्ह्ने गुडमादाय मृन्मयेन नूतनभांडेन जलमानीय ग्रामाद्बहिर्या
वतायतने गृहद्वारि वाश्मचितीरे वा पिण्डदानादैशान्यां दिशि अग्निं प्रज्वाल्य तंडुलप्रसृतिद्वयं प्रक्षाल्य सुस्पृष्टं तं स्वयं पंधा

ततो दक्षिणप्लवने भूभागे गोमयोपलिप्ते गौरमृत्तिकया पिण्डार्थं दक्षिणप्लवणस्थानं निर्माया चांतः कृतापसव्यो दक्षिणामुखः
पातितवामजानुः पिण्डस्थानोपरि दक्षिणाग्रं कुशत्रयमास्तीर्य पुटकादौ जलतिलगंधपुष्पाणि प्रक्षिप्य तत्पात्रं वामहस्ते कृत्वा
मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत शिरःपूरकप्रथमपिण्डस्थाने अत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठ
तामिति कुशत्रयोपरि अवनेजनं दद्यात् ततस्तिलघृतमधुयुक्तं दुग्धसिक्तं तप्तमेव पिण्डमादाय मोटकतिलजलानि चाद
य ॐ अद्यामुकगोत्र पितरमुकप्रेत एष शिरःपूरकः प्रथमः पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवशं प्राप्तं नरं
पंचत्वमागतं धर्माधर्मसमायुक्तं लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यांल्लोकान्स गच्छतु शीघ्रं इति मंत्रमुच्चार्य प्रदक्षि
णं विधाय ज्वलदुल्मुकस्य शिरोदेशे दानं मंत्रश्चायमदृष्टार्थत्वात् स्त्रीदाहेऽप्यविकृत एव पठनीयः पुंस्त्वस्याविवक्षणात् तं
क्षत्रियकर्तृके वैश्यकर्तृके चानाथब्राह्मणदाहे वैश्यकर्तृकन ... सर्वस्वानाथराजदाहे पितृमेधयज्ञफलसमफलम् ॥
ततस्तृणकाष्ठादि घृतं परिक्षिप्य दग्ध्वा किंचिच्छेषयेत् ततः प्रादेशमात्रसप्तकाष्ठिकाभिः सह प्रदक्षिणसप्तकं विधाय कुठा
रेणोल्मुकोपरि प्रहारसप्तकं कृत्वा क्रव्यादाय नमस्तुभ्यमित्युक्त्वा एकैकां काष्ठिकामग्नौ क्षिपेत् अनतीतद्विवर्षं प्रेतं गंधमाल्यादि
भिरलंकृत्य अहरहर्नयमानो गामश्वं पुरुषं पशून् वैवस्वतो न तृप्यति सुरापइव दुर्मतिरिति यमगाथां गायंतो बान्धवा ग्रामाद्ब
हिः शुचिदेशे निखनेयुः तत्र नोदकदानादि अथोदकदानादि तत्र प्रेतदाहानंतरं सर्वे शवस्पृशः शवानुगमनकर्तारश्च चि
तां वामावर्तेन परावृत्य सव्यावर्तं प्रेतमनवलोकमानाः अहरहर्नयमानो गामश्वं पुरुषं पशून् वैवस्वतो न तृप्यति सुरापइव दुर्मतिरि

श्रा० ति यमगाथांगायंतोनदीमवाहाज्जलाशयांतरंवावालानग्रे कृत्वागच्छेयुः ततःश्यालकमन्यंवायाचेरन्नुदकंकरिष्यामइतिसब्रूयात्
वि० कुरुध्वंमाचैवंपुनरित्यशतवर्षेप्रेतेकुरुध्वमेवेतरस्मिन्निति ततःकृतापसव्यादक्षिणाभिमुखाःप्रकीर्णकेशाःप्रक्षालितैकवस्त्रधराः
२५ ॐअपनःशोशुचदघ मितिवामहस्तानामिकयाऽघोदक्षिणतोनीत्वासकृन्निमज्जेयुः ततोवामहस्तानामिकयाकनिष्ठयापाप
मित्यघोवलिखेयुः अंगंचनविघर्षेयुः ततोद्विवाससआचम्यजलेवापाषाणपृष्ठेवाशुचितीरदेशेवादक्षिणाग्रकुशत्रयोपरिवाम
हस्तान्वारब्धदक्षिणहस्तांगुष्ठतर्जनीमध्यात्मकपितृतीर्थेनद्विगुणभुग्नकुशत्रयेणप्रेतगोत्रनामनीउच्चार्य्यप्रेतंमनसाध्यायं
तःकुशहस्ताप्रेतायसतिलजलांजलिंदद्युः ॐअद्यामुकगोत्रपितरमुकप्रेतएषतिलतोयांजलिस्तेमयादीयतेतवोपतिष्ठता
मितिवाक्येनततः कंकतिरूपेणवाममुष्टिनाचलिखितंपापमितिसव्यांगमेवलिखेयुःजा तानामपिशवस्पर्शनमपिकर्त
व्यम् ज्ञातयोनैवतस्यांरात्रांवपक्वान्नंपचेयुः यावदाशौचंमृण्मयपात्रेपत्रपुटेपाणौवाक्रीतंलब्धमनामिषंदिवाभुंजीरन्नेकका
लंत्रिरात्रमक्षारलवणाशिनः द्वादशरात्रंमहागुरुषु मातापिताऽऽचार्य्यश्चेतिमहागुरवःसर्वेब्रह्मचारिणोदीनामलिनवाससो
भोगवर्ज्जिताःशस्त्रपाणयोऽधउपवेशिनःपृथक्स्थितोशयीरन् उपवेशनेशयनेचतृणप्रस्तरणमुपासीरन् प्रेतक्रियावर्जम १०
नावश्यकंनकिंचित्कर्मकुर्युःपंचमसप्तमनवमदिवसेषुसर्वेषामेवसपिण्डानांबहिःस्नानंतिलोदकदानंमूत्रवस्त्रप्रक्षालनंस २५
हभोजनंचतुष्पथश्मशानगृहेषुदीपदानंमंगसंवाहनंच तैलाभ्यंगजागरादिकंप्रेताप्यायनकरम् प्रथमपिंडवत् द्वितीयादि
षुदिवसेषुद्वितीयादिपिंडदानम् तत्रविशेषः द्वितीयदिनेपिंडदानवाक्येकर्णाक्षिनासिकापूरकोद्वितीयःपिंडः इतिलतो

यांजली द्वे तिलतोयपात्रे तृतीयदिने गलांसभुजवक्षःपूरकस्तृतीयः पिंडः त्रयस्तिलतोयांजलयः त्रीणि तिलतोयपात्राणि चतुर्थदिने नाभिलिंगगुदपूरकश्चतुर्थः पिंडः चत्वारस्तिलतोयांजलयः चत्वारि तिलतोयपात्राणि पंचमदिने जानुजंघापादपूरकः पंचमः पिंडः पंचतिलतोयाञ्जलयः पंचतिलतोयपात्राणि षष्ठदिने सर्वमर्मपूरकः षष्ठः पिण्डः षट्तिलतोयांजलयः षट्तिलतोयपात्राणि सप्तमदिने सर्वनाडीपूरकः सप्तमः पिण्डः सप्ततिलतोयांजलयः सप्ततिलतोयपात्राणि अष्टमदिने दंतलोमादिपूरको ऽष्टमः पिण्डः अष्टौ तिलतोयांजलयः अष्टौ तिलतोयपात्राणि नवमदिने वीर्यपूरको नवमः पिण्डः नव तिलतोयांजलयः नव तिलतोयपात्राणि दशमदिने पूर्णत्वतृप्तताक्षुद्विपर्ययपूरको दशमः पिण्डो देयः दशतिलतोयांजलयः दशतिलतोयपात्राणि अन्यत्सर्वं समानं तथाहि शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः गलांसभुजवक्षांसि तृतीयेन यथाक्रमात् चतुर्थेन तु पिंडेन नाभिलिंगगुदानि च जानुजंघे तथा पादौ पंचमेन तु सर्वदा सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः दंतलोमाद्यष्टमेन वीर्यन्तु नवमेन तु दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्यय क्षत्रियवैश्यशूद्राणां संपूर्णाशौचे नवसु दिनेषु नव पिंडान्दत्त्वा ऽशौचांतदिने दशमपिंडदानं त्र्यहाशौचे ब्राह्मणादिभिः सर्वैः प्रथमदिवसे त्रयः पिण्डा दातव्याः द्वितीयदिने चत्वारः तृतीयदिने त्रयः पिण्डा देयाः अथवा प्रथमदिवसे एकः पिण्डः द्वितीयदिवसे चत्वारः तृतीयदिवसे पंच एवं दश पिंडा दातव्याः सद्यःशौचे त्वेकाहे नैव दश पिण्डा दातव्याः असंपूर्णाशौचान्तरे एकैकं पिण्डमेकैकस्मिन्दिने दत्त्वांतिमदिने ऽवशिष्टाः पिण्डा देयाः पाकासंपत्तौ फलमूलशाकगुडदुग्धशालिसक्तूनामन्यतमे

नपिंडोदेयः येनद्रव्येणप्रथमपिण्डो दत्तस्तज्जातीयेनैवपिण्डांतरमपिदद्यात् पुत्राद्यधिकारिणि विदेशस्थेऽन्येनदाहकर्त्रापिंड
दानेकृतेपिपुत्रादिरपिपिण्डंदद्यात् येनैवप्रथमःपिण्डोदत्तः सएवपिण्डांतरमपिदद्यात् अथास्थिसंचयः चतुर्थेब्राह्मणानांतुपं
चमेहनिभूभुजां नवमेवैश्यजातीनां शूद्राणांदशमात्परे कर्तव्यंतुनरैःश्राद्धं देशकालाविरोधतः श्राद्धमत्रास्थिसंचयनि
मित्तकम् एतच्चसंपूर्णाशौचेषुदिनकथनम् एवमशौचिनामंगस्पर्शेपि चतुर्थेहनिविप्रस्यषष्ठेवैक्षत्रियस्यतु अष्टमेदश
मेचैवस्पर्शःस्याद्वैश्यशूद्रयोः यत्तुप्रथमेह्नितृतीयेवासप्तमेनवमेपिवा अस्थिसंचयनंकार्य्यंनिजैस्तद्गोत्रजैःसहेतिस्मृ
तिवाक्यं तद्ब्राह्मणादीनांचतुर्थादिदिनेष्वस्थिसंचयासंभावनायांप्रथमादिदिवसेष्वस्थिसंचयविधायकम् त्र्यहाशौचेतुद्वि
तीयेह्निसद्यःशौचेतद्दिनएवास्थिसंचयःकर्तव्यः असंपूर्णाशौचांतरेषु तृतीयभागोत्तरमस्थिसंचयोंऽगस्पर्शश्चकर्तव्य इ
ति अथप्रयोगः चतुर्थेदिनेस्नात्वाचतुर्थपिण्डंदत्वाश्राद्धदेशस्यगोमयोपलेपनंपंचगव्योपलेपनंज्वलदंगारभ्रमणंगो
रमृत्तिकाच्छादनानिकारयित्वागोरसर्षपैस्तिलैश्चविकिरणंस्वयंचश्राद्धकर्तापाकमारभेत ततः सिद्धेन्नेरक्षादीपंसंस्थाप्यश्राद्धदेया
निवस्तून्यासाद्य आचम्यपूर्वाभिमुखउपविश्य ओंअपवित्रःपवित्रोवाइत्यादिपठित्वा पुण्डरीकाक्षःपुनात्विति श्राद्धीयवस्तूनांकुशत्रयज
लेनसेचनं ततः ओंअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यास्थिसंचयननिमित्तकमेकोद्दिष्टश्राद्धमहंकरिष्य इतिसंकल्पंकुर्यात् ततस्त्रि
गायत्रीजपित्वा ओंदेवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वा मोटकतिलजलान्यादायदक्षिणाभिमुखःसव्यंजानुपातयित्वा ओंअ
द्यामुकगोत्रपितरमुकप्रेत अस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धे इदमासनंतेमयादीयतेतवोपतिष्ठतामित्यासनं मोटकरूपमुत्सृजेत्

ततओं अपहताऽअसुरारक्षा ७ सिवेदिषद इति आह्देशे वामावर्तेन तिलान्विक्षिपेत् ततओं आयन्तुन इति मंत्रं जपेत् ततः पुटके कु
शपत्रद्वयं प्रादेशमात्रं दक्षिणाग्रं धृत्वा ओं शन्नोदेवीरभिष्टय इति तत्र जलं दद्यात् ओं तिलोसीति तिलान्दद्यात् तूष्णीं गंधं पुष्पं च
तत्र क्षिपेत् ततस्तदर्घपात्रं वामहस्ते कृत्वा कुशपत्रद्वयं परिवेषणपात्रे उत्तराग्रं धृत्वा तदुपरि किञ्चिदुदकांतरं दत्वा ओं या दिव्या
ऽआप इत्यादि पठित्वा मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्ध एष हस्तार्घस्ते म
यादीयते तत्रोपतिष्ठतामिति पवित्रोपरि अर्घजलं ददद् उत्सृजेत् ततः पवित्र पुष्प सहितमर्घपात्रमात्रमासन वामपार्श्वे पित्रे स्थान
मसीति अधोमुखं कृत्वास्थापयेत् ततो मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेताऽस्थिसंचयनिमित्तकैकोद्दिष्टश्रा
द्ध एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादीनि दद्यात् ततो जलेनासनभो
जनपात्रयोश्चतुर्दिशं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं सघृतव्यंजन तिलजलं ओं इदमन्नमेतद् स्वामि पितृभ्यो नम इति उत्सृ
जेत् ततो हस्ताभ्यां ताम्रपात्रमन्नपूर्णमादाय मनाक् स्थित्वा पितरन्ध्यायन् पुरुषत्रिस्त्रममन्नं परिविष्यात् व्यंजन घृतजला
न्युपनीय अन्नोपरि मधु दत्वा ओं मधुवाता इत्यादि त्र्यृचं ओं मधु मध्विति च जपेत् ततो व्यस्ताभ्यां हस्ताभ्यामधोमुखाभ्यां पात्रमा
लभ्य ओं पृथिवी ते पात्रमिति जपेत् ओं इदं विष्णुरिति जपेत् कृष्णकव्यमिदं रक्ष मदीयमिति पठित्वा ओं इदमन्नम् ओं इमा आ
पः ओं इदमाज्यम् ओं इदं हविरिति अन्नजलघृतान्नेषु दक्षिणहस्तांगुष्ठं निवेश्य ओं अपहता इति तिलानन्नोपरि क्षिप्त्वा वा
महस्तेन पात्रमत्यजन् दक्षिणहस्तेन मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेतास्थिसंचयननिमित्तकैकोद्दिष्टश्रा

श्रा० वि० २७

इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो गायत्रीं मधुवाता इत्यादिऋचं च ओं मधु मधु मध्विति ओं अन्न॥
हीनं क्रियाहीनमिति च जपेत् ततः कुशेषूपविश्य गायत्रीं मधुवाता इत्यादिकं जपेत् तत ओं कृणुष्व पाज इत्यादि रक्षोघ्नीः ओं उ
दीरतामित्यादि पितृमंत्रान् पुरुषसूक्तम् आशुः शिशान इत्यादिकं अप्रतिरथमन्यानि च पवित्राणि यथाशक्ति जपेत् ओं नमस्तुभ्य
मिति श्लोकं च जपेत् तत उच्छिष्टसन्निधानास्तृतकुशत्रयां भूमिं जलेन प्रोक्ष्य तिलघृतसहितमन्नं जलेनाप्लाव्य ओं अग्निद॥
ग्धा ये जीवा ये प्यदग्धाः कुले मम इत्यादिमंत्रेण कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वाऽन्नपा
त्रसमीपे पिण्डदानार्थं मृत्पिंडिकायां मध्ये प्रादेशमात्रं परिमाय वामान्वारब्ध दक्षिणहस्तेन ओं अपहता इत्यादिनैतद्विलि
ख्य दर्भपिंजुलीमुत्तरस्यां दिशि क्षिप्त्वा रेखोपरि ओं ये रूपाणीति मंत्रेणांगारं भ्रामयित्वांगारं दक्षिणतः क्षिपेत् ततो रेखोपरि छिन्न
मूलान्कुशानास्तीर्य ओं देवताभ्य इति सव्येन त्रिर्जपेत् ततोऽपसव्येन पुटके जलतिलगन्धपुष्पाणि क्षिप्त्वा पुटकं वामहस्ते कृ
त्वा मोटकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेताऽस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते मया॥
दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनजलं किंचिद्दद्यात् ततो घृतमधुतिलयुक्तेनान्नेन पिण्डं निर्माय घृतमध्व
भिधारितं पिण्डं मोटकादीनि चादाय ओं अद्यामुकगोत्र पितरमुकप्रेताऽस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्ध एष पिण्डस्ते म
या दीयते तवोपतिष्ठतामिति कुशोपरि वामान्वारब्धदक्षिणहस्तेन पिण्डं दद्यात् तत आस्तृतकुशमूले तूष्णीं करं प्रोक्ष्य स
व्यं कृत्वाचम्यापसव्यं कृत्वा ओं अत्र पितमींदयस्वेत्यादिमंत्रं पठित्वा उत्तराभिमुखीभूय श्वासनिरोधं कुर्यात् पितरं भा—स्वरमूर्तिं ध्या

ए० २७

यन् अमीमदन्तपितायथेत्यादिना ऊहेनजपेत् ततःपूर्वावशिष्टजलमवनेजनपात्रं वामहस्तेकृत्वा मोटकादीन्यादाय ॐअद्या
मुकगोत्रपितरमुकप्रेताऽस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डेऽत्रमत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रत्यव
नेजनंदद्यात् ततोनीवींविस्रंस्यसव्यंकृत्वाचम्य हरिंस्मृत्वा अपसव्यंकृत्वा वामहस्तेनसूत्रमादाय कराभ्यांतद्गृहीत्वा एतत्ते
पितर्वासः इतिसूत्रंपिण्डोपरि धृत्वा ॐअद्यामुकगोत्रपितरमुकप्रेताऽस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डे एतद्वास
स्तेमयादीयतेतवोपतिष्ठतामिति मोटकादिनादद्यात् ततःपिण्डंगंधपुष्पधूपदीपतांबूलैरभ्यर्च्य पिण्डशेषान्नंपिण्डस
मीपेविकिरेत् ॐशिवाआपःसन्तु ॐसौमनस्यमस्तु ॐअक्षतंचारिष्टमस्तु इतिअन्नपात्रेजलादीनिदत्वा मोटकादी
न्यादाय ॐअद्यामुकगोत्रस्यपितरमुकप्रेतस्यास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धेदत्तैतदन्नपानादिकमुपतिष्ठतामित्यु
त्सृजेत् ततःसव्यंकृत्वा दक्षिणांदिशंपश्यन् ॐअघोरःपितास्त्विति पिण्डोपरि पूर्वाग्रांजलधारांदद्यात् ततःपूर्वाभिमुखः
ॐगोत्रंनोवर्द्धतांदातारोनोभिवर्द्धन्तां वेदाःसंततिरित्यादिना आशिषोयाचेत् ततोऽपसव्यंकृत्वा पिण्डोपरि सपवित्रान् कुश
नास्तीर्य पुटकादिजलेन ॐऊर्ज्जंवहन्तीरमृतंघृतंपयइत्यादिपठित्वा कुशोपरि दक्षिणाग्रांजलधारांदद्यात् ततःपिण्डमा
घ्रायोत्थापयेत् छिन्नमूलकुशानंगारंचाग्नौदहेत् अर्घपात्रमुत्तानीकृत्य मोटकादीनिदक्षिणाद्रव्यंचादाय ॐअद्यामुकगो
त्रस्यपितुरमुकप्रेतस्यकृतैतदस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचन्द्रदैवतंयथानामगोत्रायब्राह्मणा
यदक्षिणांदातुमहमुत्सृजेइति दक्षिणांदद्यात् ततःसव्येन त्रिर्देवताभ्यइतिजपित्वाऽपसव्यंकृत्वा दीपंनिर्वाप्य हस्तौपादौ

प्रक्षाल्य सव्येनाचम्य ॐ प्रमादादित्यादि पठित्वा विष्णुं स्मरेत् आर्द्रीयवस्त्रं निर्ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् ततः पुत्रादि
ज्ञातिबंधुमिलितः स्नातः सुधौतवस्त्रो नानाविधफलमूलभक्ष्यपानादिभिः स्वजात्यनुरूपैः अष्टौ पात्राणि पूरयित्वा गंधपुष्पधूप
दीपादिकं च गृहीत्वा श्मशानसमीपमागत्य त्वरान्वितैः कैश्चिद्दधैः कैश्चित्पुष्पैः कैश्चिद्भोजनैः कैश्चिद्धूपैः कैश्चिद्दीपैः कैश्चिन्मा
ल्यैः कैश्चित्पानीयैः कैश्चिद्वस्त्रैः सर्वैर्निवेदयेत् कैश्चिन्निरहंकारयुक्तैः समंततश्चतुर्षु अन्नादिपूर्णपात्रेषु निवेदितेषु प्रथमं
चितायाउत्तरद्वारसमीपे उपविश्य ॐ नमः क्रव्यादमुखेभ्यो देवेभ्य इति सर्वदायेऽस्मिन् श्मशाने देवाः सुभगवंतः सनातनाः तेसम
त्सकाशाद्दत्तं तु बलिमष्टांगमक्षयम् प्रेतस्यास्य शुभान् लोकान् प्रयच्छंतु च शाश्वतान् अस्माकमायुरारोग्यं सुखं च दद
तां वरं इति पठित्वा ॐ एषोऽष्टांगबलिः शंकरादिदेवताभ्यो नमः इत्येकं बलिं दत्त्वा एवं प्रदक्षिणक्रमेण परं बलित्रयं त्रिषु द्वा
रेषु दत्त्वा तान्बलीन् क्षीरेणाभ्युक्ष्य शंकरादिदेवताः स्वीयस्वीयस्थानं गच्छंत्विति देवता विसृज्य आवशिष्टक्षीरेण वाप्यतः ॥
चितास्थान्यस्थीनि अभ्युक्ष्य प्रथमं शिरोऽस्थीनि शमीपलाशशाखाभ्यां सुहृत्त्याज्येनाभ्युक्ष्य गन्धवारिणा सिक्त्वा कृतापस
व्यो दक्षिणांगुष्ठकनिष्ठाभ्यां गृहीत्वा ततोऽन्यान्यपि अस्थीनि गृहीत्वा पञ्चगव्येन सुगंधिवारिणा सिक्त्वा पलाशपुटे निक्षिप्य
क्षौमवस्त्रेण संवेष्ट्य मृन्मये नूतनभांडे साच्छादने निदध्यात् तद्भांडमरण्ये वृक्षमूले वा पंकशैवालयुतगर्ते वा निभृतं नि
धापयेत् चिताभस्मादि तोये निक्षिपेत् गोमयांबुभिश्चिताभूमिशुद्धिं विधाय पूर्ववच्चतुर्दिक्षु शंकरादिदेवताभ्यो बलीन् घृता
दियुक्तान् नमः क्रव्यादमुखेभ्यो देवेभ्य इति मंत्रेण दद्यात् तान्विसृजेत् बल्यन्नमन्येभ्यो दद्यात् अंभसि वा क्षिपेत् ततश्चिता

भूमेराच्छादनार्थं हस्तः पुष्करकः पट्टको वारयितव्यः पुष्करकः इष्टिकानिर्मितं देवकुटकाकारं गृहम् ततः सचैलो बंधुभिः सह स्नाया
त् अथ कश्चित्पुत्रपौत्रसहोदरादिर्गंगातीरमस्थीनि नीत्वा स्नात्वा तान्यस्थीनि पंचगव्येन प्रोक्ष्य हिरण्यमध्वाज्यतिलैः संयोज्य मृ
त्पिण्डपुटे निधाय दक्षिणां दिशं पश्यन् ॐ नमोस्तु धर्म्मायेति वदन् जलं प्रविश्य प्रेतो गतः स्वर्गको मोदक्षिणाभिमुखः स मे प्रीत
इत्युक्त्वा गंगांभसि निक्षिपेत् ततः स्नात्वा उत्थाय सूर्यं पश्येत् ततः आचम्य ॐ अद्यकः तैतदस्थि म   क्षेपप्रतिष्ठार्थमिदं हिर
ण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे   इति दक्षिणां दद्यात् ॥ एवं कृते मृतपुरुषस्य स्वर्गे
गतिः स्यात्तु महेन्द्रतुल्या यावदस्थि मनुष्यस्य गंगातोयेषु मज्जति तावद्वर्षसहस्राणि स्वर्गलोके महीयते गंगातोयेषु यस्यास्थि
प्लवते शुभकर्मणः न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथंचन गौडाः दशाहाभ्यंतरे यस्य गंगातोयेषु मज्जति गंगायां मरणे याह
क्ताहक्फलमवाप्नुयात् ब्रह्मपुराणे० मातुः कुलं पितृकुलं वर्ज्जयित्वा नराधमः अस्थीन्यन्यकुलोत्थानि नीत्वा चांद्रायणं चरे
त् एवं च मातृकुलपितृकुलान्यकुलोत्थस्याप्यस्थिनयने धर्म्मबुद्ध्या दोषाभावः अथाचाराग्निरग्नेरप्यस्थिपर्णनरदाहः दाह्य शरी
रालाभे तदस्थि घृतेनाभ्युक्ष्य वस्त्रेणाच्छाद्य दहेत् अस्थ्नामप्यलाभे षष्ठ्यधिकपलाशपत्रशतत्रयेण पुरुषाकृतिं विन्यस्य ॥
ओं असौ स्वर्गाय लोकाय स्वाहेति दहेत् उदकधारां च दद्यात् तद्विन्यासप्रकारस्तु शिरसि शीर्षं दद्यात् ग्रीवायां तु दशैव
तु बाह्वोश्चैव शतं दद्यादंगुलीषु तथा दश उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा अष्टार्द्धं तु शिश्ने दद्यात् द्वादशार्द्धं वृषणयोः
ऊर्वोश्चैव शतं दद्यात् त्रिंशतं जानुजंघयोः पादांगुलीषु दश दद्यादेतत् प्रविकल्पनं अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः

तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि शतैस्त्रिभिस्तथा षष्ट्या शरव्रातैर्विधानतः वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्मणा
ऊर्णसूत्रेण बध्वाथ प्रलिप्तव्यस्तथा यवैः सुपिष्टैर्जलसंमिश्रैः प्रदग्धव्यस्तथाग्निना असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् तुल्यन्यायतया ऽस्थिदाहेपि त्रिरात्राशौचं एवं कृते प्रोषितो यद्यागच्छेत्तु मानवः क्वचित् कु
र्याद्दशायुषीस्त्विष्टिं पुनराधाय पावकं साग्नेरियमिष्टिः निरग्नेस्तु शांतिस्वस्त्ययनमन्यदिति अथाशौचान्त्यदिनकृत्यं तत्राशौ
चान्तपूर्वदिने सर्वेषां रजकद्वारा वस्त्रशुद्धिः कारयितव्या आशौचान्तदिवसे गृहशुद्धिं कृत्वा मृण्मयपाकभांडानि त्यक्त्वा स्ना
त्वा दशमं पिण्डं दत्वा स्नात्वा बहिरुदकान्ते केशलोमनखान् यथायोग्यं वापयित्वा तिलतैलेनाङ्क्त्वा गौरसर्षपकल्केन शिर
श्चोन्मज्य स्नात्वा प्रेतस्पृष्टवासांसि तेभ्यः स्वाश्रितेभ्यो दत्वा ऽऽचम्य वाग्यतो वासोयुगमहतं नवं शुद्धं पुराणं वा युक्तमन्त्रेण प
रिधाय ऽश्मानं विष्टो गां सुवर्णं गोरोचनं दधि दूर्वां सितसर्षपं ब्राह्मणो ऽग्निं क्षत्रियो वाहनायुधं वैश्यः प्रतोदं प्रग्रहौ शूद्रो यष्टिं सं
स्पृश्य मंगलानि संकीर्त्य ब्राह्मणान्स्वस्ति वाचयित्वा गृहं प्रविशेत् अत्र दिने ब्राह्मणाः पंचगव्यपानं कुर्वन्तीति सतामाचारः॥ ॥
॥ इति श्राद्धविवेके प्रथमक्रियापरिच्छेदो द्वितीयः॥ अथैकादशाहश्राद्धार्थं निमन्त्रणादि॥ तत्रादौ आशौचान्तदिने निरामि
षमेकवारं भुक्त्वा रात्रौ सर्वभुक्तजने गृहे विप्रनिवेशनं गोमयोपलिप्ते दक्षिणप्रवणभूमौ ब्राह्मणमुदङ्मुखमुपवेश्य कृताप
सव्यो दक्षिणाभिमुखः पातितवामजानुः ॐ गतोसि दिव्यलोकं त्वं कृतान्तविहितात्पथः मनसा वायुभूतेन विप्रे त्वाहं नियोजये
पूजयिष्यामि भोगेनेति प्रेतोद्देशेन पठित्वा पुष्पचंदनताम्बूलानि ब्राह्मणाय दत्वा ब्राह्मणदक्षिणजानु स्पृष्ट्वा ॐ अस्यां रात्रौ

अमुकगोत्रस्य पितुरमुकप्रेतस्याऽऽद्यश्राद्धकरणाय भवंतं ब्राह्मणमहमामंत्रये इत्यामंत्रयेत् ओं आमंत्रितोस्मीति प्रतिवचने ब्राह्म
णोक्ते ओं अक्रोधनैः शौचपरैः सततं ब्रह्मवादिना भवितव्यं भवता च मया च श्राद्धकारिणा सर्वायासविनिर्मुक्तेन कामक्रोध
विवर्जितेन भवितव्यं भवता च स्वस्तने श्राद्धकर्मणि इति ब्राह्मणमुद्दिश्य पठेत् यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करि
ष्यामीति तेनोक्ते ओं इदं पाद्यमिति पाद्यं दत्वा द्विजं नमस्कृत्य समेतमुद्दिश्य तिलतैलेनाजानु विप्रपादौ प्रक्षालयेत् अत्र स्त्रिया
अप्युद्देश्यत्वे ओं गतोसीत्यविकृतमेव पठनीयं आत्मत्वेनोद्देश्यत्वात् अथैकादशाहकृत्यं बहिर्नदीतीरे प्रातः श्वेतव
स्त्रयुगलेन स्नात्वा सूर्योदये ब्राह्मणस्य श्मश्रुकर्म नखच्छेदनं च कारयित्वा ताम्रपात्रेण तैलोद्वर्तनं स्नानोपकरणं च दद्यात्
स्वयं स्नात्वा कृतनित्यक्रियो नदीतीरे गृहे वा श्राद्धभूमिं परिकल्प्य पंचगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य गौरमृत्तिकया
ऽऽच्छाद्य तिलैः सर्षपैश्च विकिरेत् गोमयोपलिप्ते कृतपाकस्थाने तिलान्विकीर्य परितः छागान् बंधयित्वा तत्र सपिण्डः स्व
यं वा नूतनमृन्मयभाण्डैः पाकमारभेत् तत्र चांतः पूर्वाभिमुख उदङ्मुखो वा शय्यां दद्यात् तत्र ओं सोपकरणशय्यायै नमः
ओं ब्राह्मणाय नमः इति देयं ब्राह्मणं त्रिः संपूज्य इमां सोपकरणां शय्यां ददानीति द्विजकरे जलदानं वारिणा शय्याभिषेचनं
च ओं ददस्वेति प्रतिवचनम् तत्र कुशत्रयतिलजलान्यादाय ओं अद्याशौचांत द्वितीये ह्नि अमुकगोत्रस्य पितुरमुकप्रेत
स्य स्वर्गप्राप्तिकाम इमां सोपकरणां शय्यां विष्णुदैवतां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात्
ओं स्वस्तीति प्रतिवचनं ततः कुशत्रयतिलजलानि दक्षिणाद्रव्यं चादाय ओं अद्य कृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमि

दंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे इतिदद्यात् ततःप्रतिगृहीता ओंस्वस्तीतिप्रति
वचनमुक्त्वा सोपकरणांशय्यांसंस्पृशेत् ततआचम्य ओंफलवस्त्रसमन्वितकांचनपुरुषायनमः ओंब्राह्मणायनम इतिदेय
ब्राह्मणंत्रिःसंपूज्य ओंइमंफलवस्त्रसमन्वितकांचनपुरुषंददानीति द्विजकरेजलदानम् वारिणादेयद्रव्यसेचनं कुशत्रयादी
न्यादाय ओंअद्याशौचांतद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामइदंफलवस्त्रसमन्वितंकांचनपुरुषंवि
ष्णुदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इतिदद्यात् ओंस्वस्तीतिप्रतिवचनं ततोदक्षिणाद्रव्यमादाय
ओंअद्यकृतैतत्फलवस्त्रसमन्वितकांचनपुरुषदानप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतंअमुकगोत्रायामुकशर्मणेब्राह्मणायद
क्षिणांतुभ्यमहंसंप्रददे ततःप्रतिगृहीता ओंस्वस्तीत्युक्त्वा कांचनपुरुषंस्पृशेत् ततआचम्य कुशत्रयतिलजलान्यादाय ओंअद्या
शौचांतद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामो द्विजदंपती पूजनमहंकरिष्य इतिसंकल्प्य द्विजदंपती
पूजयेत् तत्क्रमः एषोऽर्घ ओंद्विजदंपतिभ्यांनमः इदमनुलेपनं ओंद्विजदंपतिभ्यांनमइत्युभयोःपादयोस्त्रिःपूजांकुर्यात् ततः
पुष्पजलाभ्यामेतानि धूपदीपतांबूलनैवेद्यसिंदूरविभूषणवासांसि द्विजदंपतिभ्यांनम इतिदद्यात् तौनमस्कुर्यात् एतच्च
द्विजदंपतिपूजनंप्रधानत्वात् वृषोत्सर्गाकरणेपिकर्तव्यं शय्यादानवदिति अथवृषोत्सर्गप्रयोगः तत्रवृषोत्सर्गसंभृतिंविवि
क्तनिर्जनवनगोमध्येप्रागुदक्प्रवणंदेशंनयेत् ततआचांतःपूर्वाभिमुखउपविश्य कुशत्रयतिलजलान्यादाय ओंअद्या
शौचांतद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यमोक्षकामःसोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहंकरिष्ये इति

संवत्सरं कुर्यात् नीलवृषप्राप्तौ नीलपदप्रक्षेपः कर्तव्यः कार्तिक्यां वृषोत्सर्गे ॐ अद्य कार्तिक्यां तिथौ अमुकगोत्रस्य पितुरमुकशर्म-
णो मोक्षकामः सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये इति संकल्प्य विशेषः वत्सतर्य्येकपक्षे चतुष्टयपद
स्थानेऽेकपदप्रक्षेपः ततउत्तराभिमुखं ब्राह्मणमुपवेश्य ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूत।
होमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवस्त्रयुग्महेमालं
करणैर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ॐ वृतोस्मीति वचनम् ॐ यथाविहितं कर्म कुरु इति यजमानस्तमुद्दिश्य
वदेत् ॐ करवाणीति तत्प्रतिवचनं तत ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गांगभूतहोमकर्म कर्तुममुकश-
र्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलहेमालंकरणवासोभिर्होतृत्वेन त्वामहं वृणे इत्याचार्यं वृणुयात ॐ वृतोस्मीति प्रतिवचनं॥
ॐ यथाविहितं कर्म कुरु इति यजमानस्तमुद्दिश्य वदेत ॐ करवाणीति तत्प्रतिवचनम् ततो होता आचांतो गोमयोपलिप्त वे
दिकायां प्राङ्मुख उपविश्य पुरतः कुशैर्हस्तमात्रं चतुरस्रं स्थंडिलं परिसमुह्य कुशानैशान्यां क्षिप्त्वा गोमयोदकेनोपलिप्य
मध्ये प्रादेशमात्रमुत्तरक्रमेण स्रुवमूलेन त्रिरुल्लिख्य उल्लेखनक्रमेण दक्षिणांगुष्ठानामिकाभ्यां संगताग्राभ्यां मृदमुद्धृ।
त्य ऐशान्यां तां क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थकांस्येन तूष्णीमग्निं स्थापयेत् अग्नेर्दक्षिणतः परिस्तरणभू
मिमतिक्रम्य ब्रह्मासनमुपकल्प्य तत्र प्रागग्रकुशैः परिस्तरणं विधाय ब्रह्माणमग्नेः सव्यापसव्यं प्रदक्षिणमानीय कल्पिता
सने वर्हिर्हस्तमुदङ्मुखमुपवेशयेत् ततोऽग्नेरुत्तरतः स्तरणभूमिमतिक्रम्य कुशत्रयमास्तीर्य तत्र सांतरालमपात्रस्थं ब

हिंषाच्छादितं सर्वकार्यार्थमुदकं सीरं च ब्रह्ममुखमवलोक्य निदध्यात ततउपमूलं बर्हिषा मुष्टिचतुर्थभागेनाग्नेर्यादीशानांतं प्रा
च्याम् ब्रह्मणोऽग्निपर्यन्तं दक्षिणस्याम् नैर्ऋताद्वायव्यांतं पश्चिमायाम् अग्नितः प्रणीतापर्यन्तमुत्तरस्यां स्तरणं कुर्यात् ततआसादनमु
पयोक्ष्यमाणानामग्नेरुत्तरतः प्रणीतापश्चिमे प्राक्संस्थमुदक्संस्थं वा तद्यथा पवित्रच्छेदनार्थं कुशत्रयं पवित्रार्थमनंतर्गर्भिणं
साग्रं कुशपत्रद्वयम् प्रोक्षण्यर्थं मृत्पात्रम् आज्यार्थं ताम्रस्थाली पायसचर्वर्थं मृत्तिकास्थाली स्रुवसंमार्ज्जनार्थं कुशत्रयम् उप
ग्रहार्थं वेणीरूपं कुशत्रयं प्रादेशमित पलाशसमित्त्रयम् स्रुव आज्यं तण्डुलं दुग्धं एवमासाद्य तदुत्तरतः पौष्णं सिद्धमेव पिष्टमय
चरुं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुग्मं सुवर्णं कांस्यादुपकल्पयेत् ततो वायव्यत आसादितकुशपत्रद्वयमादा
य पवित्रच्छेदनकुशैः प्रादेशमात्रं प्रमाणं छिंद्यात् तानपास्य पवित्राभ्यां प्रणीतोदकमुत्पूय सपवित्रकरेण प्रणीतोदकं त्रिः प्रो
क्षण्यां निधाय उदगग्रपवित्रे व्यस्तहस्तयोरंगुष्ठानामिकाग्राभ्यामनयोरादाय तन्मध्येन प्रोक्षण्युदकं भूमौ त्रिः क्षिप्त्वा पवित्रे प्रो
क्षण्यां निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्तानामिकांगुष्ठाभ्यां तज्जलं किंचिदूर्ध्वमुत्क्षिप्य प्रणीताज
लेन प्रोक्षणीमभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत्प्रोक्ष्य पवित्रशेषजलसहितपात्रं प्रणीताग्न्योरन्तरे निधाय आज्य
स्थाल्यामाज्यं निरूप्य चरुस्थाल्यां तण्डुलान्त्रिः क्षिप्य प्रणीतोदकेन तांस्त्रीः प्रक्षाल्य तत्र प्रणीतोदकं दुग्धं च प्रक्षिप्य स्वयं चरुं
ब्रह्मणा चाज्यं गृहीत्वा प्रदक्षिणीकृत्याग्निपूर्वेण नीत्वा दक्षिणत आज्यमुत्तरतः पायसं चरुं श्रपणार्थं युगपदग्नौ निधाय उल्मुकं
सहविष्काग्नेः प्रदक्षिणं भ्रामयित्वा तत्रैव वह्निं ज्ञात्वा स्रुवस्य प्रागग्रस्याबाङ्मुखस्याग्नौ प्रतपनमुत्तानस्य संमार्ज्जनकुशैरभ्यंतरतो ग्रा

न्मूलपर्यन्तंमध्येमध्यतएव मूलेवाह्यतोमूलादग्रपर्यंतंसंमार्ज्जनंप्रणीताद्भिरभ्युक्षणंपुनःप्रतपनंआस्तत्तवर्हिषिस्वपुरतः॥
प्रागग्रस्यस्थापनंविधायततःपाकेहृतेस्वयमाज्यमुद्वास्याग्निपश्चिमेननीत्वाप्रणीतोत्तरतःवोह्यस्याज्यपश्चिमेननीत्वाआ
ज्यस्योत्तरतोनिधायस्वपुरतःस्रुवोत्तरेआज्यंतदुत्तरतःचरुंनिधायप्रोक्षणीतःपवित्रेसमानीयआज्येप्रोक्षणीवदुत्पवनम्।
पवित्रेप्रोक्षण्यांनिधायआज्यमवेक्ष्यसत्पद्रव्येतन्निरस्यप्रोक्षण्युत्पवनंविधायपायसचरोरुत्तरतःपूर्वसिद्धपिष्टकचरुं।
निधाय होमसमाप्तिपर्यंतमुपग्रहार्थंकुशैर्वामहस्तेउपग्रहंविधायप्रजापतिंमनसाचिंतयन्नुत्तिष्ठन् प्रागग्रघृताक्तसमित्त्र
यंवह्नौप्रक्षिप्योपविश्यप्रोक्षण्यद्भिःसहविष्कमग्निंप्रणीताब्रह्मसहितंपर्युक्ष्यपवित्रेप्रणीतासुनिधायप्रोक्षणीपात्रंस्व।
स्थानेनिदध्यात् ततोब्रह्मणाकरवर्हिषान्वारब्धोदक्षिणजानुनामयित्वा संस्रवंविनैवाज्येनजुहुयात् स्वाहांतोहोमः इदम
ग्नयेइतित्यागः ओंइहरतिःस्वाहा॰इदमग्नये १ ओंइहरमध्वं स्वाहा॰इदमग्नये २ ओंइहधृतिःस्वाहा॰ इदमग्नये ३ ओंइह
स्वधृतिःस्वाहा॰इदमग्नये ४ ओंउपसृजंधरुणंमात्रेधरुणोमातरंधयन्स्वाहा॰इदमग्नये ५ ओंरयस्पोषमस्मा सुदीधरत्स्वाहा॰
इदमग्नये ६ ततःआकृष्णजुप्राग्रेदक्षिणभागेमनसाओंप्रजापतयेस्वाहा॰ इदंप्रजापतये १ अग्नेरुत्तरभागेऋजुमाकृ ओंइन्द्रा
यस्वाहा॰इदमिन्द्राय २ ततउत्तरपूर्वार्द्धे ओंअग्नयेस्वाहा॰इदमग्नये १ दक्षिणपूर्वार्द्धे ओंसोमायस्वाहा॰इदंसोमाय २ इत्या
घारावाज्यभागौच संस्रवंहुत्वा पायसंपैष्टकमेकंचादायसमिद्धतमेग्नौसंस्रवंविनैवपायसेनजुहुयात् ओंअग्नयेस्वाहा॰इ
दमग्नये १ ओंरुद्रायस्वाहा॰इदंरुद्राय २ ओंशर्वायस्वाहा॰इदंशर्वाय ३ ओंपशुपतयेस्वाहा॰इदंपशुपतये ४ ओंउग्रायस्वाहा

इदमुग्राय ५ ओं उशनसे स्वाहा· इदमुशनसे ६ ओं भवाय स्वाहा· इदं भवाय ७ ओं महादेवाय स्वाहा· इदं महादेवाय ८ ओं ईशानाय स्वाहा
इदमीशानाय ९ इति हुत्वा पिष्टकेन ओं पूषा गा ऽअन्वेतु नः पूषा रक्षत्वर्वतः पूषा वाजं सनोतु नः स्वाहा· इदं पूष्णे १ ततः पायस
पिष्टकाभ्यामुत्तरार्द्धविदानभूताभ्यां ओं अग्नये स्विष्टकृते स्वाहा॥ इदमग्नये स्विष्टकृते अग्नेर्मध्यभागे ततः आज्येन ओं भूः स्वा
हा· इदं भूः १ ओं भुवः स्वाहा· इदं भुवः २ ओं स्वः स्वाहा· इदं स्वः ३ ओं त्वन्नो ऽग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः य
जिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा· इदमग्नीवरुणाभ्याम् ४ ओं स त्वन्नो ऽअग्नेवमो भवोती
नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न ऽएधि स्वाहा· इदमग्नीवरुणाभ्याम् ५ ओं अयाश्चा
ग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमया असि अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा· इदमग्नये ६ ओं ये ते शतं वरुण ये सह
स्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा· इदं वरुणाय सवित्रे विष्ण
वे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः ओं उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय अथा वयमादित्य व्रते तवानागसो
ऽअदितये स्याम स्वाहा· इदं वरुणाय ८ ओं प्रजापतये स्वाहा· इदं प्रजापतये ९ इति मनसा एवं हुत्वा संस्रवप्राशनमाचमनं च कृ
त्वा पवित्राभ्यां शिरःप्रभृति संमार्जनं ओं सुमित्रिया न आप ऽओषधयः सन्त्विति मंत्रेण ततः ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान्
द्वेष्टि यं च वयं द्विष्म इति मंत्रेण प्रणीतोदकमैशान्यां निनयेत् ततः फलपुष्पान्वितघृतेन ओं मूर्द्धानं दिवो ऽअरतिं पृथिव्या वै
श्वानरमृत आजातमग्निं कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः स्वाहा· इदमग्नये· इति यजमानस हि

तद्धोता पूर्णाहुतिं कुर्यात् ततः स्तरणाक्रमेण बर्हिस्त्थाप्याज्येनाभिघार्य ॐ देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं देवय
ज्ञं स्वाहा वाते धाः स्वाहा इदमग्नये इति बर्हिर्होमं हस्तेनैव कुर्यात् ततो यजमानः कुशत्रय तिल जलान्यादाय ॐ अद्य
कर्त्तव्य वृषोत्सर्गाङ्गभूत कृतैतद्धोमकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म प्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममु
कगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां दद्यात् ॐ स्वस्तीति प्रतिवचनम् य
जमानेन तत्परितोषार्थं किंचिद्दातव्यम् ततो वस्त्रयुग्म सुवर्ण कांस्यान्युपनीय कुशादीन्यादाय ॐ अद्य कर्त्तव्य वृषोत्सर्गाङ्गभूत
कृतैतद्धोमप्रतिष्ठार्थमेतानि वस्त्रयुग्म सुवर्ण कांस्यानि बृहस्पति वह्नि चन्द्र देवतानि अमुकगोत्रायामुकशर्मणे ब्राह्मणाय
होत्रे दक्षिणां तुभ्यमहं संप्रददे इति होत्रे दक्षिणां दद्यात् ॐ स्वस्तीति प्रतिवचनम् ततो रुद्राध्यायं जपित्वा कर्मकारमाहूय
वृषमंकयेति ब्रूयात् स चाग्निमपाद्दक्षिणपार्श्वे चक्रेण पश्चिमपाद्वामपार्श्वे त्रिशूलेन वृषभमंकयेत् ततो वत्सतरी चतु
ष्टयसहितं वृषभं कुशजलेन स्नापयेत् तत्र स्नानकरणमंत्राः ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः
याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः शंस्योना भवन्तु ॐ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनाना
म् याऽअग्निं गर्भं दधिरे सुवर्णास्तानऽआपः शंस्योना भवन्तु ॐ यासां देवा दिवि कृण्वन्ति भक्षं या अंतरिक्षे बहुधा भवन्ति या
अग्निं गर्भं दधिरे सुवर्णास्तानऽआपः शंस्योना भवन्तु ॐ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे घृतश्चुतः
शुचयो याः पावकास्तानऽआपः शꣳस्योना भवन्तु ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये शंयोरभिस्रवन्तु नः ॥ ततो लोहघंटि

कपिलगव्यैनमः ॐब्राह्मणायनमः इतिदेयद्रव्यब्राह्मणौ [illegible] संपूज्य ॐइमांसोपकरणांसवत्सांकपिलांगांददानीति द्विजकरेजल
दानंजलेनदेयद्रव्याभिषेचनम् कुशादीन्यादाय ॐअद्याशौचांतद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामः
इमांकपिलांगांहेमशृंगींरौप्यखुरांवस्त्रयुगच्छन्नांकांस्योपदोहांमुक्तालांगूलभूषितांसवत्सांरुद्रदैवताममुकगोत्रायामुकश
र्मणेब्राह्मणायतुभ्यमहंसंप्रददे इतिदद्यात् ॐस्वस्तीतिप्रतिवचनम् ततोदक्षिणाद्रव्यादिकमादाय ॐअद्यकृतैतत्सोप कर
णसवत्सकपिलगवीदानप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्यमहंसंप्रददे
इतिदक्षिणांदद्यात् ततःप्रतिगृहीता ॐस्वस्तीत्युक्त्वा गोपुच्छग्रहणम् यथा शाखंकामस्तुतिंचकुर्यात् तत्रकोदात्कस्मा
अदात्कामोदात्कामायादात् कामोदाताकामःप्रतिगृहीताकामैतत्तेइतियजुर्वेदे ॐकइदंकस्माऽआदात्कामःकामायादात्का
मोदाताकामःप्रतिगृहीताकामस्समुद्रमाविशत् कामेनत्वाप्रतिगृह्णामिकामैतत्तेइतिसामवेदेकामस्तुतिः यथोक्तकपिलाला
भेकेवलामपिदद्यात् तत्रपूजादिपूर्ववत् ॐअद्याशौचांतद्वितीयेह्नि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामः इमांकपि
लांगांरुद्रदैवतांअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइतिदद्यात् ॐस्वस्तीतिप्रतिवचनम् ततोदक्षिणाद्रव्या ए०
दिकमादाय ॐअद्यकृतैतत्कपिलगवीदानप्रतिष्ठार्थमिदंहिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्य ३४
महंसंप्रददे इतिदक्षिणांदद्यात् ॐस्वस्तीतिप्रतिवचनं गोपुच्छग्रहणंकामस्तुतिश्चपूर्ववत् ततोमहानद्यादौसचैलंस्ना
त्वातीर्थानिमनसाध्यात्वातज्जलेनात्मानमभ्युक्ष्योत्तरेत् ॥ अथैकादशाहश्राद्धप्रयोगः ॥ सचसुगतिसोपानानुसारेणलिख्यते०

तत्र मध्याह्ने सुचिरं चांतः शुक्लं द्विवासा गोमयोपलिप्तायामपसव्यवत् कृतगोमूत्रमंडलायां भूमौ मंडलाद्बहिः ॐ भूम्यै नमः इति त्रिः पुष्पा
क्षतपूजितायां भूमौ दर्भेषु तिष्ठन् पात्रब्राह्मणं यजमानः सवर्णेनाऽऽहूतं स्नातमाचांतं ॐ स्वागतमिति पृच्छेत् ॐ सुस्वागतमिति तेनोक्ते उभा
वप्युपविशतः ततः श्राद्धकर्ता इदं ते पाद्यमिति पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनंद्य पात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा ज
लतिलगंधपुष्पयुतमर्घपात्रमादाय मोटकतिलजलानि चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मया दीयते त
वोपतिष्ठतामिति पादार्घं दद्यात् ततः शिरसाऽभिवंद्य जानुविनिःश्राव्य ॐ इदं ते आचमनीयमित्याचमनीयोदकं ब्राह्मणाय दद्यात् ॥
ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण सिद्धमिति पृच्छेत् पूर्वरात्रौ निमंत्रणासं
भवे तस्मिन्नेवाह्नि श्राद्धवेलायां मंडपाद्बहिः सुचिरं चांतः शुक्लं द्विवासा गोमयोपलिप्तायां भूमौ अपसव्यवत् कृतगोमूत्रमंडलायां भूमौ
मंडलाद्बहिः ॐ भूम्यै नम इति त्रिः पुष्पाक्षतपूजितायां दर्भेषु तिष्ठन् स्नातमाचांतं ब्राह्मणं यजमानः सवर्णेनाहूतम् ॐ स्वागतमिति पृच्छे
त् ॐ सुस्वागतमिति तेनोक्ते उभावप्युपविशतः ततः श्राद्धकर्ता इदं ते पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनंद्य पात्रब्राह्मणपादौ
प्रक्षाल्यापसव्यादि कृत्वा पुष्पचंदनतांबूलानि ब्राह्मणाय दत्वा ब्राह्मणदक्षिणजानु स्पृष्ट्वा ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्याद्य
श्राद्धकरणाय भवंतं ब्राह्मणमामंत्रये ॐ आमंत्रितोस्मीति प्रतिवचनं अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना भवितव्यं भवता च म
या च श्राद्धकारिणा सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन भवितव्यं भवता नोद्यतने श्राद्धकर्मणीति ब्राह्मणं नियमानुश्रावयेत्
भवितव्यमिति तेनोक्ते अर्घं परिकल्प्यादाय मोटकाञ्श्च आदाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मया

दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् ततः शिरः[illegible]नुनीश्राव्यस्य ॐ इदं ते आचमनीयमित्याचमनीयजलं ब्राह्मणाय दद्यात्
ततः तिलतैलेन पात्रब्राह्मण " पादावाजानु अभ्यञ्जयेत् ततः स्वयं पादौ प्रक्षाल्याचम्य ब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्ना
भिप्रायेण सिद्धमिति पृच्छेत् दक्षिणाग्रैककुशसहितेन पालकं वलाद्यां विकं ब्राह्मणोपवेशनायासनमुपकल्प्यासनं स्पृशन् ॐ अत्रा
स्मिन्ने देवराजाभ्यनुज्ञातो विश्रम्यतां द्विजवर्य्यानुग्रहात् प्रसादयेत्वासनं गृहाण पूतं ज्ञानाग्निपूतेन करेण विप्र इति मंत्रं पठित्वा पात्र
ब्राह्मणं दक्षिणहस्तेन धृत्वोदङ्मुखमुपवेशयेत् ततः पात्रस्य पादयोस्तले दक्षिणाग्रकुशत्रयं दद्यात् आसनसमीपे च तिलतैलेन घृ
तेन वा श्राद्धसमाप्तिपर्यन्तस्थायिनं दीपं कुर्यात् तद्रक्षापात्रब्राह्मणेन कर्तव्या रक्षोघ्नान् गौरसर्षपान् तिलांश्च श्राद्धदेशे सन्निधापये
त् काककुक्कुटादीन् श्राद्धदृष्टेनपसारयेत् ततः पूर्वाभिमुखः कुशोदकेन ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत् पुण्ड
रीकाक्षं स बाह्याभ्यंतरः शुचिरिति पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति पुण्डरीकाक्षं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानं च सिंचेत् ततः कु
शत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिकाम अद्यादि यथाकालं षोडशश्राद्धान्यहं करिष्य इ
तिसंकल्पयेत् एकादशमासाभ्यंतरेऽधिमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यं ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुक
गोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतु षोडशश्राद्धांतर्गताद्यश्राद्धमहं करिष्य इति संकल्पयेत् ॐ कुरुष्वेति ब्राह्मणप्रतिवचनम्
ॐ गायत्रीजपमहं करिष्ये इति पृष्ट्वा कुरुष्वेति ब्राह्मणानुज्ञातः त्रिर्गायत्रीं जपेत् सव्याहृतिकां सप्रणवां च जपनीया गायत्री देवताभ्यः पि
तृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः

मोटक तिलजलान्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्ध इदमासनं ते मया दीयते तेत वोपतिष्ठतामिति मोटकरूपमासनं तिल
जलप्रोक्षितं दक्षिणाग्रमुत्सृजेत् ततः सव्यं कृत्वा प्राङ्मुख उपविश्य ओं छत्राय नमः ओं ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपूज्य इदं
छत्रं ददानीति द्विजकरे जलं दत्वा छत्रमभिषिच्य कुशत्रयतिलजलान्यादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यावरणकाम इदं छ
त्रमुत्तानांगिरो दैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ओं स्व स्तीति प्रतिवचनं ततस्तिलजलकुशान्
दक्षिणाद्रव्यं चादाय ओं अद्य कृतैतच्छत्रदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्र
ददे इति दक्षिणां दद्यात् ततः प्रतिगृहीता ओं स्वस्तीत्युक्त्वा छत्रं दण्डे धारयेत् उपानद्भ्यां नमः ओं ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपू
ज्य ओं इमे उपानहौ ददानीति द्विजकरे जलदानं उपानहावभिषिंच्य कुशादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य तप्तवालुकासि
कंटकितभूदुर्गसंतरणकाम इमे उपानहावुत्तानांगिरो दैवते अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ओं स्व
स्तीति प्रतिवचनं ततः कुशादीन् दक्षिणाद्रव्यं चादाय ओं अद्य कृतैतत् उपान ‾ द्दानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामु
कशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ततः प्रतिगृहीता ओं स्वस्तीत्युक्त्वा उपानहावारोहेत् ततोऽपसव्यं
कृत्वा दक्षिणाभिमुखः पातितवामजानुः ओं अपहता असुरा रक्षांसि वेदिषद इति श्राद्धदेशे वामावर्तेन तिलान्विकीर्य ओं आयन्तु नः
पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानिति जपेत् ततोऽर्घपात्रोपरि अनख
छिन्नं दक्षिणाग्रं पवित्रं धृत्वा ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु न इति मंत्रेणार्घपात्रे जलं दत्वा ओं तिलो

श्रा॰ सिसोमदैवत्यो गोसवो देवनिर्मितः प्रयत्नमद्भिः एकः स्वधया पितॄंल्लोकान् प्रीणाहि नः स्वाहेति तिलान् प्रक्षिप्य गंधपुष्पैस्तूष्णीं तत्र प्रक्षि
वि॰ प्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं ब्राह्मणहस्ते उत्तराग्रं दत्वा तदुपरि किंचिदुदकांतरं दत्वा ओं या दिव्या आपः पयसा संबभूवुर्या आंत
३६ रिक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शं स्योनाः सुहवा भवंतु इति पठित्वा मोदकादीन्यादाय ओं अद्यामुक
गोत्र पितरमुकप्रेत आद्यश्राद्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति ब्राह्मणकरे पवित्रोपरि अर्घजलं दद्यादुत्सृजेत् पात्रं च
वामपार्श्वे पित्रे स्थानमसीत्यर्घपात्रं सपवित्रमधोमुखं स्थापयेत् तच्च दक्षिणादानपर्यंतं न चालयेत् ततः श्राद्धदेशे तिलान् विकी
र्य दर्भहस्तो भूतले प्रेतमावाहयेत् तत्र मंत्रः इहलोकं परित्यज्य गतोसि परमां गतिमिति अत्र स्त्रीश्राद्धेपि गतासीत्येवमेव पठनीयमा
त्मत्वेनोद्देश्यत्वात् ततो मोदकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्ध एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवी
तवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादीनुत्सृजेत् ततः सर्वसुगंधि इति मंत्रेण गंधान् ओं श्रिया देव्या इति मंत्रेण पुष्पम्
ओं वनस्पतिरस इति मंत्रेण धूपम् ब्राह्मणाय निवेदयेत् तत ओं एष दीप इति निवेदिते ओं सुदीपः ब्राह्मणो वदेत् ओं एतानि तांबूला
नीति निवेदिते ओं सुतांबूलानीति ब्राह्मणो वदेत् ओं इमे यज्ञोपवीते इति निवेदिते ओं सुयज्ञोपवीते इति ब्राह्मणो वदेत् ओं एतानि वासां १०
सीति निवेदिते ओं सुवासांसीति ब्राह्मणो वदेत् पुष्पाणि शिखायामेव द्विजेन धार्याणि ततः प्रेतोपभुक्तशय्यासनादिकं गंधपुष्पैर ३६
भ्यर्च्य श्राद्धभोक्त्रे प्रतिपादयेत् ततो गौरमृत्तिकया नीवारचूर्णेन जलेन वा ब्राह्मणं वेष्टयित्वा चतुरस्रं मंडलं कुर्यात् परकीयभूमौ श्रा
द्धकरणे श्राद्धीयवस्तुषु किंचिदुद्धृत्य तिलमलघृतयुक्तमन्नं ओं इदमन्नमेतद्भूस्वामिपितृभ्यो नम इति दद्यात् जीवतां भूस्वामिनां

किंचिद्दानिकरं दद्यात् ततउष्णमन्नं ताम्रपात्रेणकराभ्यामादाय मनाक्स्थित्वा पितरं ध्यात्वा पुरुषत्रिप्रस्मं परिविष्यात् ततइदं मधुरमि
दमत्युष्णमित्यादिव्यंजनगुणानुकीर्तयन् मांसादीनिव्यंजनानिभूषिष्टपात्रांतरेषु परिविष्य घृतं सतिलजलं चोपनीय अन्नं मधुनाभिघा
रयेत् ॐ मधुवाताऽऋतायते मधुक्षरंति सिन्धवः माध्वीर्नः सन्त्वोषधीः ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः मधुद्यौरस्तु नः
पिता ॐ मधुमान्नो वनस्पतिर्मधुमाꣳ ऽअस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः ॐ मधु मधु मध्विति च पठित्वा व्यस्ताभ्यां पाणिभ्यां पात्रमा
लभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते ऽअमृतं जुहोमि स्वाहा इति जपेत् ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पद
म् समूढमस्य पाꣳ सुरे इतिपठन्न मत्तरूपतयान्नं विचिंत्य ॐ कृष्णकव्यमिदं रक्षमदीयमिति पठित्वा ॐ इदमन्नम् ॐ इमा आपः ॐ
इदमाज्यम् ॐ इदं हविरिति पात्र ब्राह्मणदक्षिणांगुष्ठमन्नजलघृतान्नेषु विवेश्य ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषद इत्यन्नो
परि वहून्तिलान् प्रक्षिप्य मोदकादीन्यादाय वामेन पाणिना पात्रमत्यजन् ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्ध इदमन्नं सो
पकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो भ वान् प्राशमयत्विति ब्रूयात् विप्रायापोशानं दत्वा सप्रणवां सव्याहृतिकां
गायत्रीं ॐ मधुवाता इत्यादित्रिचम् ॐ मधु मधु मध्विति च जपित्वा ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रम
स्त्विति पठित्वा ॐ यथासुखं जुषस्वेति ब्राह्मणं ब्रूयात् ब्राह्मणश्च वामेन पाणिना पात्रमत्यजन् ॐकारपूर्वकं भुंजीत संज्ञयापि भक्ष्यमा
र्थनं न कुर्यात् श्राद्धकर्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीं मधुवाता इत्या[illegible]स्त्वं मधु मधु मध्विति च जपेत् गायत्रीं ब्राह्मणश्रा
वयित्वा ॐ कृणुष्व पाज इत्यादीन् रक्षोघ्नमंत्रान् पठित्वा भूमिं तिलैरास्तीर्य्य ब्राह्मणं पितृरूपतयाध्यायेत् ततउदीरतामित्यादि पि

श्रा० तमंत्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकम् अप्रतिरथम् अन्यान्यपि शतरुद्रियप्रभृति पवित्राणि रुचिरस्तवप्रभृ
वि० तीनि च पठेत् अतः ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नम इति श्लोकमपि पठेत् वीणादिभि
३७ र्ब्राह्मणं हर्षयन् व्यंजनादिगुणान् कीर्तयन् ॥ तस्य यत्र यत्रेच्छा उपलभ्यते तत्तदुपनयन् मंदं मंदं भोजयेत् ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्नि
धावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नं तिलघृतसहितं जलेनाप्लाव्य गृहीत्वा ॐ अग्निदग्धा ये जीवा येप्यदग्धाः
कुले मम भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिमिति मंत्रेण मंत्रस्य फलमुद्दिश्य कुशोपरि तदन्नं विकिरेत् ततः सव्यं कृत्वाचम्य हरिं
स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखो ब्राह्मणाय जलगंडूषमिदं ते प्रत्यापोशानमिति दत्वा ॐ स्वदितमिति ब्राह्मणं पृच्छेत् ॐ सु
स्वदितमिति तेनोक्ते ॐ पिंडं महं करिष्ये इति पृच्छेत् कुरुष्वेति ब्राह्मणानुज्ञातः उच्छिष्टसन्निधौ चतुरस्रं हस्तैकप्रमाणं दक्षिणप्रवणं
चतुरंगुलोच्छ्रितं स्थानं निर्माय तन्मध्ये वामहस्तेन दर्भपिंजुलीमादाय तन्मूलेन वामान्वारब्धदक्षिणकरेण प्रादेशमात्रं लिखेत् ॐ
अपहता असुरा रक्षांसि वेदिषद इति मंत्रेण रेखामुल्लिखेत् दर्भपिंजुलीं उत्तरस्यां दिशि निक्षिपेत् तदुपरि ये रूपाणि प्रतिमुंचमानाऽ
असुराः संतः स्वधया चरंति परापुरो निपुरो ये भरंत्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् इत्युल्मुकं भ्रामयित्वा रेखादक्षिणतः क्षिपेत् त ग्रं०
दुपरि उपमूलसकृल्लूनकुशान् दक्षिणाग्रानास्तीर्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पर्णपुटकादिकमेकं तिल ३७
जलगंधपुष्पयुतं वामहस्ते कृत्वा दक्षिणहस्ते मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे पिण्डस्थानेऽत्रावनेनि
क्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनं दद्यात् ततः श्राद्धशेषमन्नं सर्वव्यंजनतिलमधुघृतयुतमेकीकृत्य तेन बिल्व

परिमाणपिण्डं निर्माय घृतमध्वभिघारितं कृत्वा दक्षिणहस्तेनादाय मोटकादीन् आदाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्ध ए
ष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनस्थाने सव्योपगृहीतदक्षिणकरेण पिण्डं दद्यात् आस्तृतदर्भमूले करं प्रो
ञ्छ्य सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वा ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व इति पठित्वा वामावर्तेनोदङ्मुखो भूत्वा मन
कृत्वा संनियम्य तेनैव यथासुखं पर्यावर्तयन् पितरं भास्करमूर्तिं ध्यायन् अमीमदंत पितरो यथाभागमावृषायिषत इति पठेत् अवनेज
नावशिष्टजलयुतपात्रं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्धपिण्डेऽत्र प्रत्यव
ने निक्ष्व ते मया दीयते तवोपतिष्ठतामिति पिण्डोपरि प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रस्य सव्यं कृत्वाचम्य हरिं स्मृत्वा वामेन पाणि
ना धृतं सूत्रं दक्षिणहस्तेन गृहीत्वा ॐ एतत्ते पितर्वास इति पिण्डोपरि धृत्वा मोटकादिकमादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत
आद्यश्राद्धपिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततस्तूष्णीं पिण्डे गंधपुष्पधूपदीपतांबूलानि दद्यात् ततः पि
ण्डशेषान्नं पिण्डसमीपे विकिरेत् तत आचांतस्य ब्राह्मणस्य करे ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितं ब्राह्मणस्य करे न्यस्ताः
शिवा आपो भवन्तु मे इति जलं दद्यात् ॐ भवन्तु ते ब्राह्मणस्य तत्प्रतिवचनम् लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे लक्ष्मीर्वसति गो
ष्ठे सुसौमनस्यं सदास्तु मे इति पुष्पाणि दद्यात् ॐ अस्तु सदा तवेति प्रतिवचनम् अक्षतं चास्तु मे पुण्यं शांतिः पुष्टिर्धृतिश्च मे यद्यच्छ्रे
यस्करं लोके तत्तदस्तु सदा मम इति तण्डुलानि दद्यात् ॐ अस्तु सदा तवेति प्रतिवचनम् अथवा शिवा आपः संत्विति जलं सौमनस्यमस्त्वि
ति पुष्पम् ॐ अक्षतं चारिष्टमस्त्विति तंडुलान् दद्यात् ॐ संत्विति ॐ अस्त्विति च प्रतिवचनं ततः पुटकादि पात्रे शांत्युदकं परिकल्प्य मे

श्रा० दिनी शिरसाभिवंद्य इमं मंत्रं पठेत् ॐ नमो नमो मेदिनि लोकधात्रि उर्वि महि शैलगिरि धारिणि नमः धरणि काश्यपि जगत्प्रतिष्ठे वसु
वि० धे नमोऽस्तु वैष्णवि लोकधात्रि नमोऽस्तु ते सर्वसप्रतिष्ठे निवापनावीचि नमोऽस्तु ते ततो मोटकादिकमादाय ॐ अद्यामुकगोत्रस्य पितु
३८ रमुकप्रेतस्य आद्यश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामिति विप्रकरे अक्षय्योदकं दद्यात् ॐ उपतिष्ठतामिति प्रतिवचनम् ततः
सव्यं कृत्वा प्राङ्मुखः कृतांजलिस्तन्मनाः सुमनाः दक्षिणां दिशं पश्यन् ॐ अघोरः पितास्त्विति पठेत् अत्र पूर्वाभिमुखो पिण्डोपरि जल
धारां ददातीत्याचारः ॐ अस्त्विति प्रतिवचनं ततः पूर्वाभिमुखः गोत्रं नो वर्द्धतामिति वदेत् ॐ वर्द्धतामिति प्रतिवचनं ॐ दातारो नोऽभिव
र्द्धन्तां वेदाः संततिरेव च श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचि
ष्म कंचन एताः सत्याशिषः संत्विति आशिषो ब्राह्मणं याचेत् ॐ संत्विति ब्राह्मणप्रतिवचनं ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पि
ण्डोपरि दक्षिणाग्रं धृत्वा ॐ नमो वाचयिष्य इति पृच्छेत् ॐ वाच्यतामित्यनुज्ञातः ॐ पित्रे नमः उच्यतामिति वदेत् ॐ अस्तु नम इति प्रतिव
चनम् ततः पुटकादिस्थितं जलं गृहीत्वा ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्पयत मे पितरमिति द
क्षिणाग्रं जलधारां सपवित्रकुशोपरि दद्यात् ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ॥ ग०
ततोऽर्घपात्रमुत्तानीकृत्य मोदकतिलजलान्यादाय दक्षिणाद्रव्यं चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतदाद्यश्राद्ध ३८
प्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणादानं ॐ स्वस्तीति प्र
तिवचनम् श्राद्धकर्ता पात्रब्राह्मणस्य चरणौ संवाह्य तं नमस्कुर्यात् ततो दक्षिणपाणिना पात्रब्राह्मणदक्षिणपाणिं गृहीत्वा शय्या

सनमंजनकंकतिकां चार्पयेत् ब्राह्मणश्चांजनकंकतिकां चादाय शय्यामाक्रम्य मुहूर्तं विश्रमेत् ततः सामवेदाध्यायिब्राह्मणास्ताम्रपात्रस्थं तिलोदकमुपाहरेयुः ततः श्राद्धकर्ता तेन जलेन गृहस्थितं द्रव्यमभिषिंचयेत् ततः सव्यं विधाय ओं अग्निमुखा देवास्तर्प्यंतामिति यवयुतजलेन कुशैः कुशोपरि तर्पयेत् अवशिष्टमन्नं ओं भूतेभ्य एष बलिर्नम इति जलपुष्पाभ्यां बलिं दद्यात् ततः सामग ब्राह्मणान्भोजनादिभिः संतोषयेत् ततोऽपसव्येन ओं निःशेषकारं स्वस्तिब्रूहीति ब्राह्मणाय वदेत् स्वस्तीति ब्राह्मणो ब्रूयात् स्वस्त्यस्तु इत्युक्त्वा ब्राह्मणमुत्थाप्य जलपात्रं गृहीत्वा निमंत्रणस्थानस्थितं ब्राह्मणं ओं आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आमागंतां पितरामातरो चामा सोमोऽमृतत्वेन गम्यादिति पठन् प्रदक्षिणी कुर्वन् वारिधारया निर्वेष्टयित्वा प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् सव्यं कृत्वा ओं देवताभ्य इति विसर्जयित्वा गृहं प्रविशेत् ततः पाणिभ्यामपसव्येन श्राद्धोपदीपनिर्वापणं सव्यं कृत्वा हस्तौपादौ प्रक्षाल्याचम्य ततः श्राद्धसंपूर्णकामः ओं प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा विष्णुस्मरणं कुर्यात् ततः आशौचांतद्वितीयदिने एव यथाशक्ति महार्हाणि रत्नानि गाः वाहनं यानानि दासीदासं महांति वेश्मानि शय्याभूषणानि प्रेतहितमुद्दिश्य ब्राह्मणाय दद्यात् तद्यथा अद्याशौचांत द्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां गां रुद्रदैवतां यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे इति गां दद्यात् ओं अद्य कृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति यथाशक्ति दक्षिणां दद्यात् एवं भूमिहिरण्यादिदानमपि अस्मिन्दिने दशप्रभृतिश्रोत्रियान्भोजयेत् तान्परितोषयेत् तत्र दिने विहितमपि पंचगव्यपानं शिष्टानाचरंतीति न लिखितम् अथान्नोदककुंभदानम्

तत्र एकादशाहश्राद्धं कृत्वा आचम्य प्राङ्मुख उपविश्य कुशतिलजलान्यादाय ॐ पित्र्गताहरहरन्नोदकुंभोपस्थितिस्वर्गतास्त्वमेधयज्ञ
जन्यफलसमफलप्राप्तिकामोऽद्यादि पितृमरणदिनावधिकाशौचावच्छिन्नदिनेन वत्सरं यावत्प्रत्यहं पित्रे सान्नोदकुंभदानमहं करिष्ये
इति जलपूर्णकुंभमुपनीय संकल्पं कुर्यात् ततोऽपसव्यादि कृत्वा मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं मासमनंते म
या दीयते तवोपतिष्ठतामित्यासनमुत्सृज्य सघृतव्यंजनमन्नमुपनीय ॐ अद्यामुकगोत्र पितरमुकप्रेताऽयं सान्नोदकुंभस्ते मया दीयते
तवोपतिष्ठतामित्युत्सृजेत् तदुभयं पात्रं ब्राह्मणाय प्रतिपादयेत् अशौचापनिपाते प्यं दातव्य इति सपिंडने कृते वर्षाभ्यंतरे ॐ अद्यामु
कगोत्र पितरमुकशर्मन्निदं मासनं तुभ्यं स्वधा ॐ अद्यामुकगोत्र पितरमुकशर्मन्नयं सान्नोदकुंभस्तुभ्यं स्वधेति वाक्यं कुर्यात् त
तो मोदकादीन्यादाय ॐ अद्य कृतैतत्सान्नोदकुंभदानप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुम
हमुत्सृजे इति प्रत्यहं सान्नमुदककुंभं दत्त्वा दक्षिणां दद्यात् अत्र द्वादशाहश्राद्धं कार्यमिति केचित् तदपि एकादशाहवत् अ
थ मासिकश्राद्धप्रयोगः तत्र श्राद्धपूर्वदिने एकभक्तादिकं विधाय प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यदिने पुनः स्नात्वा कृतनित्यक्रि
य आचांत उपविष्टः पूर्वोपकल्पितं प्रज्वालितं प्रदीपं स्थापितगौरसर्षपतिलारक्षोघ्नं श्राद्धदेशमागत्य ॐ सिद्धमिति दृष्ट्वा कुशत्रयः
जलेन ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ॐ पुंडरीकाक्षः पुनातु इत्युच्चार्य श्रा
द्धदेयद्रव्याण्यात्मानं च सिंचेत् ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतप्रथममासिकश्राद्ध
महं करिष्ये इति संकल्पं कुर्यात् एकादशमासाभ्यंतरेऽधिमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यं तत स्त्रिर्गायत्रीं जपित्वा

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् ततोऽपसव्यादि कृत्वा मोदका-
दिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्ध इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनमुत्सृजेत् ॐ अपहताऽ
असुरा रक्षाꣳसि वेदिषद इति वामावर्तेन श्राद्धदेशे तिलान्विकिरेत् तत आयंतु नः पितर इति मंत्रं पठेत् ततः पुटकादौ पवित्रं द-
क्षिणाग्रं धृत्वा ॐ शन्नो देवीरिति मंत्रेण तत्र जलं क्षिपेत् ॐ तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄ-
न्लोकान्प्रीणाहि नः स्वाहेति तिलान्प्रक्षिप्य तूष्णीं गंधपुष्पं च निःक्षिपेत् ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रमन्नपात्रोपरि उत्तरा-
ग्रं धृत्वा तदुपरि किंचिदुदकांतरं दत्वा ॐ या दिव्याऽआपः पयसा संबभूवुर्या आंतरिक्षाऽउत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्तान
ऽआपः शिवाः सꣳ स्योना सुहवा भवन्तु इति पठित्वा दक्षिणहस्तेन मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासि-
कश्राद्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि जलं दद्यात् ततः पवित्रादिसहितमर्घपात्रमासनवामपार्श्वे ॐ
पितृस्थानमसीति न्युब्जं कुर्यात् पुनर्मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्ध एतानि गंधपुष्पधूपदी-
पतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादिकमुत्सृजेत् तत आसनस्य भोजनपात्रसहितस्य चतुर्दिशं
चतुरस्रं मंडलं कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यंजनतिलजलयुतं पुटकादौ कृत्वा ॐ इदमन्नमेतद्भूस्वामि पितृभ्यो नम इत्युत्सृजे-
त् ततस्ताम्रपात्रादिस्थितमन्नं हस्ताभ्यामादाय मनाक् स्थित्वा पितरं ध्यायन् भोजनपात्रे उपनयेत् पुरुषस्त्रियस्समन्नं परिवि-
ष्य भूमिष्ठपात्रांतरे सुव्यंजनान्युपकल्प्य पुटकस्थितं घृतं जलं चोपनीय अन्नोपरि हस्तद्वयगृहीतपात्रेण मधु दत्वा ततः ॐ मधु

वाताऽऋतायते इत्यृचं ओं मधु मधु मध्विति च जपेत् ततो व्यस्तहस्ताभ्यामन्नपात्रमालभ्य ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअ
मृते अमृतं जुहोमि स्वाहा ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे कृष्ण कव्यमिदं रक्षस्व मदीयमिति पठित्वा
वामेन पाणिना पात्रमत्यजन् दक्षिणहस्तांगुष्ठमन्नजलघृतान्नेषु ओं इदमन्नम् ओं इमा आपः ओं इदमाज्यम् ओं इदं हविरिति निःक्षिप्य
ओं अपहता असुरा रक्षांसि वेदिषद इत्यन्नोपरि तिलान्विकीर्य दक्षिणहस्तेन मोदकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रे
त प्रथममासिकश्राद्ध इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो गायत्रीं मधुवाताऽऋतायते इत्यृचं ओं मधु मधु
मध्विति च जपेत् अन्नहीनं मंत्रं पठेत् ततः कुशेषूपविश्य पुनर्गायत्रीं मधुवाताऽऋतायते इत्यृचं मधु मधु मध्विति च जपेत् रक्षोघ्नमं
त्रान् कृणुष्व पाज इत्यादिकान् जपेत् भूमौ तिलान् क्षिप्त्वा पित्र्यमंत्रपुरुषसूक्ताप्रतिरथादीनि पवित्राणि यथाशक्ति जपेत् ओं नम
स्तुभ्यं विरूपाक्षेति श्लोकमपि च पठेत् उच्छिष्टसन्निधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य सव्यं अ[illegible]तिलयुतमन्नं वारिणाप्लाव्य ओं अ
ग्निदग्धाश्च ये जीवा ये प्यदग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिं इति तदन्नं कु[illegible]विकिरेत् ततः सव्यं कृत्वाचम्य हरिं
स्मृत्वा पसव्यं कृत्वा पिंडस्थानं निर्माय तन्मध्ये वामहस्तोपात्तदक्षिणहस्तगृहीतदर्भपिंजु[illegible]न प्रादेशमात्रमपहतेत्यादिनो
ल्लिख्य दर्भपिंजुलीमुत्तरतस्त्यजेत् ततो रेखोपरि ओं ये रूपाणीति मंत्रेणांगारं भ्रामयित्वा [illegible]क्षितस्त्यजेत् ततो रेखोपरि उ
पमूलसकृल्लूनकुशत्रयं दक्षिणाग्रमास्तीर्य सव्येन देवताभ्य इति त्रिर्जपेत्ततोऽपसव्यं कृत्वा [illegible]तिलजलगंधपुष्पाणि कृत्वा
मोदकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्ध पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठता

मित्यवनेजनं कुशोपरि दद्यात् ततस्तिलघृतमधुयुतेनान्नेन पिण्डं कृत्वा घृतमधुभ्यामभिघार्य दक्षिणहस्तेन मोदकादीनिचा
दाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति वामजान्वारभ्य दक्षिण
हस्तेनावनेजनस्थाने पिंडं दद्यात् ततो दर्भमूले करं प्रोक्ष्य सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखः ॐ अ
त्र पितर्मादयस्व यथाभागमावृषायस्वेति पठेत् तत उत्तराभिमुखीभूय श्वासं नियम्य पितरं भास्करमूर्तिं ध्यायन् मुखं पर्यावर्त
यन् अमीमदंत पिता यथाभागमावृषायिषेति पठेत् ततोऽवनेजनपात्रं दत्त्वा वशिष्टजलयुतं वामहस्ते कृत्वा दक्षिणहस्ते
मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे पिण्डे त्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठ
तामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् ततो नीवीं विस्रंस्य सव्यं कृत्वाचम्य अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणे
नादाय उभाभ्यां पिण्डोपरि एतत्ते पितरो वास इति सूत्रं धृत्वा मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिक
श्राद्ध पिण्ड एतद्वासस्ते मया दीयते तवोपतिष्ठतामिति सूत्रं समुत्सृजेत् ततस्तूष्णीं गंधपुष्पादिकं दद्यात् ततः पिण्डशेषान्नं पि
ण्डसमीपे विकिरेत् ॐ शिवा आपः संत्विति जलं ॐ सौमनस्यमस्त्विति पुष्पं अक्षतं चारिष्टमस्त्विति तंडुलान् अन्नपात्रोपरि क्षिपे
त् मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रथममासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योद
कं दद्यात् ततः सव्यं कृत्वा ॐ अघोरः पितास्त्विति दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखीभू
य ॐ गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च इत्यादिनाशीः प्रार्थनं कुर्यात् ततोऽपसव्येन पिण्डोपरि सपवित्रान् कु

श्रा॰ शानुधृत्वा पुष्पकादिस्थजलेन ॐ ऊर्ज्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितरमिति कुशोपरि दक्षिणा
वि॰ ग्रं जलधारां दद्यात् ततः पिण्डमाघ्रायोत्थाप्य पेत् पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् अर्घपात्रमुत्थाप्य मोदकादीन्याद्राय
४१ ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मण
य दक्षिणां दातुमहमुत्सृज इति दक्षिणां दद्यात् ततः सव्यं कृत्वा ॐ देवताभ्य इति विसर्जयेत् ततोपसव्यं कृत्वा पाणिना दीपं
निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्यमाचमनं च कुर्यात् ॐ प्रमादादिति पठित्वा विष्णुं स्मरेत् श्राद्धीयवस्तूनि ब्राह्मणाय प्रति
पादयेत् जले वा क्षिपेत् प्रायेणा पात्रकमेव मासिकश्राद्धं कुर्वंतीत्यत्र पात्रकप्रयोगो लिखितः त्रिपक्षश्राद्धमपि कर्तव्यमिति तन्मासिकवत्
एवमेव द्वितीयमासिकतृतीयमासिकचतुर्थमासिकपंचममासिकोनषाण्मासिकषाण्मासिकसप्तममासिकाष्टममासिकनवममासिक
दशममासिकैकादशमासिकोनवार्षिकद्वादशमासिकश्राद्धेषु तत्तत्पदप्रक्षेपेण प्रयोग ऊह्यः अधिमासपाते एकादशमासिकानंतरं
द्वादशमासिकं तत ऊनवार्षिकं ततस्त्रयोदशमासिकं श्राद्धमिति क्रमः सपात्रकमासिकश्राद्धकरणे ब्राह्मणनिमंत्रणस्वागतप्रश्नपाद्या
र्घदानाचमनीयदानब्राह्मणोपवेशनप्रश्नप्रतिवचननमोवाचनब्राह्मणविसर्जनादि विशेष आद्यश्राद्धप्रयोगवदूह्य इति॰ अथ श्रा॰
सपिण्डनश्राद्धप्रयोगः तत्र चाधुनिकाः प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयमपात्रकमेव कुर्वंतीति तथैव लिख्यते तत्र पूर्वदिने निरामि ४१
षमेकवारं भुक्त्वा रात्रौ सर्वभुक्तजनगृहे विप्रनिवेशनं गत्वा दक्षिणाप्लवगोमयोपलिप्तायां भूमावाचांत उपविश्य ब्राह्मणमुदङ्मुखमु
पवेश्य कृतापसव्यः पुष्पचंदनतांबूलानि ब्राह्मणकरे दत्त्वा दक्षिणकरेण ब्राह्मणजानुस्पृष्ट्वा ॐ अस्यां रात्रावमुकगोत्रस्य पितु

रमुकप्रेतस्य श्वः सपिण्डीकरणश्राद्धकरणाय भवंतं ब्राह्मणमामंत्रये इत्यामंत्रणं कुर्यात् ओं आमंत्रितोस्मीति प्रतिवचनम् ततः ओं अ
क्रोधनेनेत्यादि ओं सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन भवितव्यं भवतानः श्वस्तने श्राद्धकर्मणीति ब्राह्मणं नियमान् श्रावये
त् यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करिष्यामीति तत्प्रतिवचनम् ततोऽग्रिमदिने प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यदिने
पुनः स्नात्वा कृतनित्यक्रियः श्राद्धकर्ता श्राद्धनिषिद्धेतरवेलायां गोमयोपलिप्तायां हस्तपाकस्थाने तिलान्विकीर्य परितस्त्रुगान्बंध
यित्वा सपिण्डद्वारा नूतनभाण्डैः स्वयं वा पाकमारभेत् श्राद्धभूमिं पंचगव्येनोपलिप्य ज्वलदंगारैः संशोध्य गौरमृत्तिकयाच्छाद्य ति
लैः सर्षपैश्च विकिरेत् द्विजं कारितश्मश्रुनखच्छेदनमभिगम्य दंतधावनम् ताम्रपात्रे तैलोद्वर्तनान्युपनीय स्नानार्थं दत्तजलं तं स्ना
तं यजमानसवर्णेनाहूतमाचांतं मध्याह्ने सुचिराचांतः शुक्ल द्विवासा उपविश्य गोमयोपलिप्तायां भूमौ वामावर्तेन कृतगोमूत्रमं
डलायां ओं भूम्यै नमः इत्यक्षतपुष्पैरभ्यर्चयित्वा भूमौ कुशत्रयमास्तीर्य तदुपरि तिष्ठन् ओं स्वागतमिति स्थितं ब्राह्मणं पृच्छेत्
ओं सुस्वागतमिति तेनोक्ते ओं इदं ते पाद्यमित्युपनीय विनीतः सन् पुनः पुनरभिनंद्य पात्रं ब्राह्मणपादौ प्रक्षालयेत् ततः पुटके ऽर्घं
कृत्वा दक्षिणाभिमुखोऽपसव्यं कृत्वा मोटकादिकमादायार्घपात्रं वामहस्ते कृत्वा ओं अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकर
णश्राद्ध एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् तत आचमनीयजलं पात्रस्थमभिनीय शिरसाभिवंद्य
जानुनी विश्राव्य ओं इदं ते आचमनीयमित्याचमनीयजलं ब्राह्मणाय दत्वा स्वयं पादौ प्रक्षाल्याचम्य तमाचमय्याग्रे कृत्वा श्राद्धदेश
मागच्छेत् पूर्वरात्रौ निमंत्रणासंभवे तस्मिन्नेवाह्नि श्राद्धवेलायां पूर्वोक्तविशेषणविशिष्टं यजमानसवर्णेनाहूतं पूर्ववत्कृतगोमूत्र

श्रा० तिलघृतव्यंजनयुतमन्नं ओंइदमन्नमेतद्भूस्वामिपितृभ्योनमइतिदक्षिणमुखमुत्सृजेत् ततःसव्यंकृत्वा ताम्रपात्रादिकंगृहीत्वाते
वि० नान्नमादायमनाकुस्थित्वा देवान्ध्यायन् पात्रे परिविष्यात् व्यंजनानि घृतं जलंच तत्रोपनीयान्नोपरिमधुदत्वा ओंमधुवाताइति
४३ त्र्यृचा ओंमधुमधुमध्विति मंत्रैरन्नमभिमंत्रयेत् ततऋजुहस्ताभ्यामन्नपात्रमालभ्य ओंपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमु
खेऽमृतेऽमृतंजुहोमिस्वाहा ओंइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपांसुरे इतिच पठित्वा ओंकृष्णहव्यमिदंर
क्षमदीयमिति पठित्वा ओंइदमन्नमित्यन्ने ओंइमाआपइतिजले ओंइदमाज्यमिति घृते ओंइदंहविरिति पुनरन्ने दक्षिणकरांगुष्ठ
मावेश्य ओंयत्नोसीत्यन्नोपरियवान्निक्षिप्य कुशत्रययवजलान्यादाय ओंअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरण
निमित्तकामुकगोत्रपितामह प्रपितामह वृद्धप्रपितामहामुकामुकशर्मणां श्राद्धसंबंधिनोविश्वेदेवाएतद्वोन्नंसोपकरणंन
मइत्यन्नमुत्सृजेत् एवंदैवकाण्डंनिर्वर्त्य हस्तौपादौप्रक्षाल्य कुशबटुकादिकंपुनर्गृहीत्वा प्रेतश्राद्धदेशमागत्योपविश्य अ
पसव्यादिकृत्वा दक्षिणाभिमुखोमोटकादीन्यादाय ओंअद्यामुकगोत्रपितरमुकप्रेतसपिण्डीकरणश्राद्धइदमासनंतेमयादीय
तेतवोपतिष्ठतामिति क्षिपेत् आसनंमोटकरूपंतिलजलप्रोक्षितमुत्सृजेत् पुनर्मोटकादिकमादाय ओंअद्यामुकगोत्रस्यपितुरमुक ए०
प्रेतस्यसपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्यपितामहस्यामुकशर्मणइदमासनंतेस्वधा इतिस्थानत्रये कृतासनेषुस ४३
र्वपश्चिमस्थानस्थितमासनंपितामहायोत्सृजेत् पुनर्मोटकादीन्यादाय ओंअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणनि
मित्तकश्राद्धेऽमुकगोत्रस्यप्रपितामहस्यामुकशर्मणइदमासनंतेस्वधा इतिमध्यममासनंप्रपितामहायोत्सृजेत् पुनर्मोटकादि

श्राद्धेऽमुकगोत्रस्य वृद्धप्रपितामहस्यामुकशर्मण
कमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपितामहस्यामुकशर्मण इदमासनं ते स्वधेति सर्वत्र पूर्वमासनं वृद्धप्रपितामहायोत्सृजेत् ततः पितामहादीनुद्दिश्य ॐ पितॄन् हमावाहयिष्य इत्युक्त्वा उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे इति पितामहादीनावाह्य ॐ अपहता इत्यादि उभयत्र श्राद्धस्थाने तिलान्विकीर्य ॐ आयन्तु नः पितर इत्यादि मन्त्रं जपेत् ततोऽर्घपात्रचतुष्टयेऽनवच्छिन्नं दक्षिणाग्रं पवित्रं प्रत्येकं धृत्वा ॐ शन्नोदेवीरिति प्रत्येकं जलं क्षिप्त्वा ॐ तिलोसीति स्वाहा तेन मन्त्रेण प्रत्येकं तेष्वेव तिलान्प्रक्षिप्य गंधपुष्पे तेष्वेव तूष्णीं प्रक्षिप्य प्रेतार्घपात्रं वामहस्ते कृत्वा पवित्रपात्रं ब्राह्मणकरे उत्तराग्रं धृत्वा तदुपरि किंचिज्जलांतरं दत्वा ॐ यादिव्या आप इति पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पात्रं ब्राह्मणहस्ते पवित्रोपरि अर्घजलं ददुत्सृजेत् अवशिष्टजलसहितार्घपात्रं ब्राह्मणाग्रे निदध्यात् पितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलांतरं दत्वा ॐ यादिव्या इत्यादि पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्नेष ते हस्तार्घः स्वधेति पूर्ववदर्घं दद्यात् अवशिष्टजलयुतमर्घपात्रमग्रे धारयेत् ततः प्रपितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलांतरं दत्वा ॐ यादिव्या इत्यादि पठित्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र प्रपितामहामुकशर्मन्नेष ते हस्तार्घः स्वधेत्यर्घं दद्यात् पूर्ववदुत्सृजेत् तदर्घपात्रमवशिष्टजलयुतमग्रे स्था

पयेत् तृतीयार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलांतरं दत्त्वा ॐ यादिव्या इति पठित्वा मोटकादीन्यादाय ॐ
अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे ऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेष ते हस्तार्घः स्वधे
ति पूर्ववदर्घमुत्सृजेत् अवशिष्टजलयुतार्घपात्रमग्रे स्थापयेत् ततः सव्यं कृत्वा आचम्य अपसव्यं कृत्वा पुटकत्रयमग्रे धृत्वा
प्रेतार्घपात्रं गृहीत्वा ॐ ये समानाः सुमनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ये समानाः सुमन
सो जीवा जीवेषु मामकाः तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतꣳ समाः इति मन्त्राभ्यां प्रेतार्घपात्रस्थजलतृतीयभागं
पुटकांतरे धृत्वा पुनरपि मंत्रद्वयं पठित्वा ऽपरतृतीयभागं पुटकांतरे धृत्वा प्रेतार्घपात्रस्थतृतीयभागजलं पुटकांतरे धृत्वा॥
तूष्णीं प्रथमपुटकस्थं विभक्तजलतृतीयभागं प्रेतार्घपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घपात्रमादाय ॐ ये समाना इति मंत्र
द्वयेन प्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपात्रस्थजले मेलयेत् एवमपरपुटकस्थितार्घतृतीयभागद्वयं क्रमेण प्रत्येकं
प्रेतार्घपात्रे कृत्वा प्रत्येकं मंत्रद्वयं पठित्वा प्रपितामहार्घपात्रस्थजले वृद्धप्रपितामहार्घपात्रस्थजले मेलयेत् ततः प्रेतार्घपात्रं ब्रा
ह्मणवामपार्श्वे ॐ पित्रे स्थानमसीति न्युब्जं कृत्वा स्थापयेत् वृद्धप्रपितामहार्घपात्रस्थजलादिकं प्रपितामहार्घपात्रे कृत्वा तत्सर्वं पिताम
हार्घपात्रे कृत्वा पितामहार्घपात्रमुत्तानं प्रपितामहपात्रोपरि धृत्वा तद्द्वयमुत्तानं वृद्धप्रपितामहार्घपात्रोपरि धृत्वा पात्रत्रयमेकदैव।
पितामहासनवामपार्श्वे ॐ पितृभ्यः स्थानमसीति न्युब्जं कृत्वा स्थापयेत् एवं स्थापितमर्घपात्रचतुष्टयं दक्षिणापर्यंतं न चालयेत् ततो मो
टकादिकमादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मया

दीयंतेतवोपतिष्ठंतामिति पित्रेगंधादीनिदद्यात् पुनर्मोटकादीन्यादाय ॐअद्यामुकगोत्रस्य पितुरमुकप्रेतस्यसपिंडीकरणनिमित्त
कश्राद्धे अमुकगोत्र पितामहामुकशर्मन्नेतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिते स्वधेति पितामहायगंधादीन्युत्सृजेत्
एवंप्रपितामहायवृद्धप्रपितामहायचगंधादीन्युत्सृजेत् यथाक्रमेण ततः पितृब्राह्मणहस्तेस्वहस्तेन ॐएषगन्धइतिचंदनंनिवेद
येत् ॐसुगंधिइतितेनोक्ते ॐएतानिपुष्पाणीतिनिवेदयेत् ॐसुपुष्पाणीतितेनोक्ते ॐएषधूपइतिनिवेदयेत् ॐसुधूपइतितेनो
क्ते ॐएषदीपइतिदीपनिवेदयेत् ॐसुदीपइतितेनोक्ते ॐइमेयज्ञोपवीतेइतिनिवेदयेत् ॐसुयज्ञोपवीतेइतिप्रत्युक्ते ॐएतानि
वासांसीतिनिवेदिते ॐसुवासांसीतितेनोक्ते ब्राह्मणायप्रतिपादयेत् पुष्पाणिशिखातिरिक्तदेशेन धारयेत् ततः पात्रब्राह्मणचतु
र्दिशंचतुष्कोणमंडलंजलेनकुर्यात् अपरंपितामहादित्रिकेचतुष्कोणमंडलंकुर्यात् ततः सव्यंकृत्वाप्राङ्मुखउपविश्य पातितदक्षि
णजानुस्ताम्रपात्राद्देर्व्यंजनक्षारवर्जितंसघृतमन्नंकृत्वापुटकादिस्थजलेहस्तेन ॐअग्नयेकव्यवाहनाय स्वाहा ॐसोमायपितृमते
स्वाहा इत्याहुतिद्वयंतदन्नंचजुहुयात् ततअपसव्यंकृत्वाऽवशिष्टमन्नंपितामहादिपात्रेकिंचित्किंचिद्दद्यात् पिंडार्थंचावशेषयेत्॥
ततोहस्ताभ्यांताम्रपात्रमादाय तेनान्नंगृहीत्वा प्रेतपात्रेध्यायन्परिविष्यात् पृथक्पुटकादिस्थितानिघृतजलव्यंजनानिचोपन
येत् ततस्तेनैवचक्रमेणपितामहादिपात्रत्रयेप्रत्येकमन्नादिपरिवेषणंकुर्यात् ततःप्रेतपात्रादिस्थितान्नेषुप्रत्येकंमधुदद्यात् त
तःप्रत्येकमभिमंत्रयेत् ॐमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः माध्वीर्न्नःसन्त्वोषधीः ॐमधुनक्तमुतोषसोमधुमत्पार्थिवꣳ
रजः मधुद्यौरस्तुनःपिता मधुमान्नोवनस्पतिर्म्मधुमाꣳ२॥अस्तुसूर्य्यः माध्वीर्गावोभवन्तुनः ॐमधुमधुमध्विति मंत्रैः ततः प्रेता

श्रा० न्नपात्रं व्यस्ताभ्यां न्युब्जाभ्यां हस्ताभ्यामालभ्य ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते ऽमृतं जुहोमि स्वाहा ओं इदं विष्णुर्वि
वि० चक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे इति जपित्वा ॐ कृष्ण कव्यमिदं रक्षस्व मदीयमित्युक्त्वा पात्रे ब्राह्मणस्य दक्षिणहस्तांगुष्ठं गृ
४५ हीत्वा ओं इदमन्नं ओं इमा आपः ओं इदमाज्यम् ओं इदं हविरिति क्रमेणान्नजलघृतान्येषु तन्निवेश्य ओं अपहता इत्यन्नोपरि भ्रुरतिला
न्प्रक्षिप्य मोदकादीन्यादाय ओं अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणनिमित्तक श्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवो
पतिष्ठतामिति पित्रेऽन्नमुत्सृजेत् अनेनैव क्रमेण पितामहान्नपात्रमालभ्य ओं पृथिवी ते पात्रमित्यादि पठित्वा ओं इदमन्नमित्यादि
ना स्वदक्षिणहस्ताङ्गुष्ठनिवेशनं कृत्वा ओं अपहता इत्यादिना तिलानन्ने विकीर्य्य मोदकादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुक
प्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्र पितामहामुकशर्म्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति पितामहायान्नमुत्सृजेत् ॥
ततः प्रपितामहान्नपात्रमालभ्य पूर्ववत् ओं पृथिवी ते पात्रमित्यादिकं सर्वं कृत्वा मोदकादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुक
प्रेतस्य सपिंडीकरणनिमित्तके श्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति प्रपितामहायान्नमुत्सृजेत् ॥
ततो वृद्धप्रपितामहान्नपात्रमालभ्य पूर्ववत् ओं पृथिवी ते पात्रमित्यादिकं सर्वं कृत्वा मोदकादीन्यादाय ओं अद्यामुकगोत्रस्य पितु पृ०
रमुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति वृद्धप्रपितामहाया ४५
न्नमुत्सृजेत् ततः ओं भवान् प्राशयत्विति पात्रे ब्राह्मणाय जलचुलुकं दत्वा सप्रणवव्याहृतिकां गायत्रीम् ओं मधुवाता इत्यादि त्र्य
चं ओं मधु मधु मध्विति च जपित्वा ओं अन्नहीनमित्यादि च पठित्वा ओं यथासुखं जुषस्वेति पात्रे ब्राह्मणं प्रति ब्रूयात् स च ओंकार

पूर्ववामेनपाणिनापात्रमस्पृशन् चुलुकंगृहीत्वाभुंजीतहास्यक्रोधत्वरादिकंनकुर्यात् व्यंजनार्थंहस्तादिनापिसंज्ञांनकुर्यात् श्राद्धक
र्ताद्दर्भेष्वासीनःसप्रणवव्याहृतिकांगायत्रीओंमधुवाताइत्यादिऋचंओंमधुमधुमध्वितिचजपेत् गायत्रींब्राह्मणमनुश्रावयेत्
ओंकृणुष्वपाजइत्यादीन्रक्षोघ्नान्मंत्रान्पठित्वाभूमिंतिलैरास्तीर्य श्राद्धीयब्राह्मणंपितृरूपतयाध्यात्वा ओंउदीरतामित्यादिपितृ
मंत्रान् ओंसहस्रशीर्षेत्यादिपुरुषसूक्तम् ओंआशुःशिशानइत्यादिकमप्रतिरथमन्यानिचशिवसंकल्पप्रभृतीनिपवित्राणिऋ
ग्यजुःसामानिरुचिरस्वरप्रभृतीनिचयथाशक्तिजपेत् ओंनमस्तुभ्यंविरूपाक्षइति श्लोकमपिपठेत् वीणाध्वनिभिर्ब्राह्मणंहर्षयन्
व्यंजनगुणान् इदमन्नमित्यादिक्रमेणकीर्तयन् यत्रयत्रेच्छोपलभ्यते तस्यतस्योपनयनम् मंदंमंदंभोजयेत् ततस्तृप्तंब्राह्मणंज्ञात्वा
पितामहपात्रसन्निधावास्तृतदक्षिणाग्रकुशत्रयांभूमिंप्रोक्ष्य सर्वप्रकारकमन्नमादाय सतिलघृतंजलेनाप्लाव्य ओंअग्निदग्धा
येजीवायेप्यदग्धाःकुलेममभूमौदत्तेनतृप्यन्तु तृप्तायांतुपरांगतिमित्यास्तृतकुशोपरितदन्नंविकिरेत् ततःसव्यंकृत्वाचामेत् ह
रिंस्मृत्वा अपसव्येनपात्रब्राह्मणाय ओंइदंतेप्रत्यापोशानमितिजलगंडूषंदत्वा ओंस्वदितमिति पृष्ट्वा ओंसुस्वदितमितितेनोक्ते
ओंपिण्डमहंकरिष्ये इति पृच्छेत् ओंकुरुष्वेत्यनुज्ञातः पात्रब्राह्मणायाचमनार्थंपात्रंदापयेत् ततःप्रेतपिण्डदानार्थमेकामपरांपि
तामहादित्रिकपिण्डदानार्थमेकहस्तमितांचतुरस्रांचतुरंगुलोच्छ्रितांसैकतांदक्षिणप्लवांपिण्डिकांनिर्माय तन्मध्येवामेनपाणिना
दर्भपिंजुलींगृहीत्वा दक्षिणहस्तेनकृत्वातन्मूलेनसव्योपगृहीतदक्षिणपाणिना ओंअपहताइत्यादिपठित्वादक्षिणाग्रांरेखांमादे
शप्रमाणांसकृदुल्लिख्य दर्भपिंजुलीमुत्तरस्यांदिशिक्षिपेत् एवमेवापरपिण्डिकायाममध्येकारेखांकुर्यात् ततःपूर्वपिंडिकारेखो

श्रा० पी ॐ येरूपाणि प्रतिमुंचमानाऽअसुराः सन्तः स्वधयाचरन्ति परापुरो निपुरोयेभरन्त्यग्निष्टांल्लोकान्प्रणुदात्वस्मादिति मंत्रेणांगारंभ्रा
पि० मयित्वा दक्षिणतः क्षिपेत् एवमेवापररेखायामंगारंभ्रामयेत् ततउभयत्ररेखायामुपमूलसहकृत्तूनान्दक्षिणाग्रान् कुशान्स्तृणुयात् ॥
४६ ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पुटकचतुष्टये जलतिलगंधपुष्पाणि कृत्वा एकं पुटकं वामहस्ते कृत्वा
मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति
पूर्वपिंडिकायां छिन्नमूलोपरि अवनेजनं दद्यात् ततोऽपरं पुटकं वामहस्ते कृत्वा मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रे
तस्य सपिंडीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र पितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेति द्वितीयपिण्डिकायामास्तृ
तकुशमूलसन्निधाने पितामहायावनेजनजलं दद्यात् ततोऽपरं पुटकं वामहस्ते कृत्वा दक्षिणहस्तेन मोदकादीन्यादाय ॐ अद्या
मुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधे
त्यास्तृतकुशमध्ये प्रपितामहायावनेजनजलं दद्यात् ततोऽपरं पुटकं वामहस्ते कृत्वा मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पि
तुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेत्यास्तृत
कुशाग्रे वृद्धप्रपितामहायावनेजनजलं दद्यात् ततः सर्वव्यंजनतिलमध्वाज्यसहितान्नेन प्रेतपिंडं सर्वव्यंजनतिलजलमध्वा श्रा०
ज्यहुतशेषान्नेन पिण्डत्रयं च निर्माय चतुरः पिण्डान्मधुघृताभ्यामभिघार्य प्रथमं प्रेतपिंडं दक्षिणहस्तेन मोदकतिलजलानि चा ४६
दाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पिंडस्ते मया दीयते तवोपतिष्ठतामिति पूर्वपिंडिकायां कुशोपरि

प्रेतपिंड भाग [illegible]
वृंदगाकार

पित्रे पिंडन्दद्यात् ततो परमोटकादीन्चादाय ऊँ अद्यामुक गोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकश
र्मन्नेष पिंडस्तेस्वधेति द्वितीय पिंडिकायां प्रथमावनेजनस्थाने पितामहाय पिंडं दद्यात् पुनर्मोटकादीनि पिण्डं चादाय ऊँ अद्यामुक गो
त्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेष ते पिंडः स्वधेति प्रपितामहायापरावनेजनस्था
ने पिंडं दद्यात् पुनर्मोटक[illegible]दीनि पिंडं चादाय ऊँ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुक गोत्र वृद्धप्रपि
तामहामुकशर्मन्नेष ते पिण्डः स्वधेति वृद्धप्रपितामहायापरावनेजनस्थाने पिण्डं दद्यात् ततः पितामहादि पिंडास्तरणकुशमूले ऊँ ले
पभागभुजस्तृप्यंत्विति करं [illegible]स्य सव्यं कृत्वा चाच्युतं हरिं स्मरेत् ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पितरमुद्दिश्य ऊँ अत्र पितर्मादय
स्व यथाभागमावृषायस्वेति पठित्वोत्तराभिमुखोभूत्वा श्वासं नियम्य भास्वरमूर्तिं पितरं ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्तयन् ऊँ अ
मीमदंत पितरो यथा[illegible] मावृषायिषतेति पठेत् पितामहादीनुद्दिश्य दक्षिणामुखः ऊँ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमि
ति पठेत् उत्तराभिमुखोभूत्वा श्वासं नियम्य तुष्टान् भास्वरमूर्तीन् पितामहादीन्ध्यायन्मुखं दक्षिणां दिशं प्रत्यावर्तयन् ऊँ अमीमदंत पि
तरो यथाभागमावृषायिषतेति पठेत् ततः प्रत्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ऊँ अद्यामुके गोत्र पितरमुकप्रेत
सपिंडीकरणश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मयादीयते तवोपतिष्ठतामिति पित्रे प्रत्यवनेजनं दत्वा पितामहावनेजनपात्रं वामह
स्ते कृत्वा मोटकादीन्यादाय ऊँ अद्यामुक गोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र पितामहामुक
शर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधेति पितामहाय प्रत्यवनेजनजलं दद्यात् प्रपितामहावनेजनपात्रं गृहीत्वा मोटकादीन्यादाय ऊँ अ

द्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरण निमित्तकश्राद्धे पिण्डेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेति
प्रपितामहायप्रत्यवनेजनंदद्यात् ततोऽवशिष्टंपुटकमादाय मोदकादीनिचादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकर
णनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेति वृद्धप्रपितामहायप्रत्यवनेजनंदद्यात्॥
ततोनीवीविस्रंस्य सव्यंकृत्वाचम्य हरिंस्मृत्वा अपसव्यंकृत्वा वामेनपाणिना धृतंसूत्रंदक्षिणेनादाय ॐएततेपितर्वासइत्युभाभ्यांह
स्ताभ्यांपितृपिंडोपरिसूत्रंधारयेत् पूर्ववत्पुनःसूत्रमादाय ॐनमोवःपितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमो
वःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरोमन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्म
ॐएतद्वःपितरोवासइतिमंत्रंपठित्वा प्रत्येकंपिण्डोपरिसूत्रंधारयेत् ततोमोदकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतस
पिण्डीकरणनिमित्तकश्राद्धेपिण्डेऽमुकगोत्रपितामहामुकशर्मन्नेततेवासःस्वधेतित्यपितामहायोत्सृजेत् मोदकादीन्यादाय ॐ
अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिण्डेऽमुकगोत्रप्रपितामहामुकशर्मन्नेततेवासःस्वधेतिप्रपिताम
हायोत्सृजेत् पुनर्मोदकादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणनिमित्तकश्राद्धेपिण्डेऽमुकगोत्रवृद्धप्र
पितामहामुकशर्मन्नेततेवासःस्वधेति वृद्धप्रपितामहायसूत्रमुत्सृजेत् ततःप्रत्येकंपितृपिण्डादिषु गंधपुष्पधूपदीपतांबूलानिदद्या
त् ततःपिण्डसमीपेतत्पिण्डशेषान्नंविकिरेत् ततःपिण्डेभ्यःसूत्रादिकमपनीयहस्तद्वयेनसुवर्णरजतकुशानादायॐयेसमानाइत्यादि
मंत्रद्वयंपठित्वा प्रेतपिंडंत्रिधाविभजेत् वारद्वयंमंत्रपाठः ततःप्रथमपिण्डभागमादाय ॐयेसमानाःसुमनसःपितरोयमराज्येतेषांल्लोकः

स्वधा नमो यस्तो देवेष्वक्षय्यताम् येसमानाः सुमनसो जीवाजीवेषु मामकाः तेषां श्रीर्मयि कल्प्यतामस्मिंल्लोके शतं समाः इति
मंत्रद्वयेन पितामहपिण्डे नियोजयेत् एवं द्वितीयपिंडभागमादाय मंत्रद्वयेन प्रपितामहपिंडे नियोजयेत् एवं तृतीयपिण्डभागमा
दाय मंत्रद्वयेन वृद्धप्रपितामहपिंडे नियोजयेत् ततः प्रेतभागेन सह पिण्डत्रयं प्रत्येकमेकीकृत्य समं वर्तुलं कुर्यात् ततः प्रेतपूर्व
कं पितामहादीनुद्दिश्य पिण्डत्रये ऽर्घपुष्पधूपदीपनैवेद्यतांबूलानि दद्यात् ततः सव्येन देवान्नपात्रे ॐ शिवा आपः संतु इति ज
लं दत्त्वा अपसव्येन पितृब्राह्मणहस्ते पूर्वमंत्रेण जलं दद्यात् ॐ संत्विति प्रतिवचनम् ततः पितामहाद्यन्नपात्रे प्रत्येकं जलं
दद्यात् अनेनैव क्रमेण ॐ सौमनस्यमस्त्विति देवान्नपात्रे पुष्पम् ततोऽपसव्येन पितृब्राह्मणहस्ते अनेनैव मंत्रेण पुष्पम् ग
ततः पितामहाद्यन्नपात्रत्रिकेऽनेनैव मंत्रेण प्रत्येकं पुष्पं दद्यात् ततः सव्येनाक्षतं चारिष्टमस्त्विति देवान्नपात्रे तंडुलप्रक्षेपः
ततोऽपसव्येन प्रेतश्राद्धपात्रब्राह्मणहस्ते ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपः ततः ॐ अस्त्विति ब्राह्मणप्रतिवचनम्
पितामहाद्यन्नपात्रत्रिकेपि प्रत्येकं ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपः ततो मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पि
तुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे ऽमुकगोत्रस्य पितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति
पितामहायाक्षय्योदकं दद्यात् पुनर्मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे ऽ
मुकगोत्रस्य प्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति प्रपितामहायाक्षय्योदकं दद्यात् एवं वृद्धप्र
पितामहायाक्षय्योदकं दद्यात् ततः सव्यं कृत्वा कृतांजलिस्तन्मनाः सुमना दक्षिणां दिशं पश्यन् ॐ अघोराः पितरः संत्विति पि

तामहादिपिंडत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॐ संत्विति ब्राह्मणप्रतिवचनम् अत्र वारिधारादानमाचारात् अन्यथा तु पाठमात्रम् ततः प्राङ्मुखो गोत्रं नो वर्द्धतामिति पठेत् ॐ वर्द्धतामिति प्रतिवचनम् दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च श्रद्धा च नो माव्यगमद् बहुदेयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः संत्विति याचेत्॥ ॐ संत्विति प्रतिवचनम् ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रं कुशत्रयं दक्षिणाग्रमास्तीर्य ॐ नमो वाचयिष्ये इति ब्राह्मणं ब्रूयात् ॐ वाच्यतामित्यनुज्ञातः ॐ पित्रे नमः उच्यतामिति ब्राह्मणं ब्रूयात् ॐ अस्तु नमः इति ब्राह्मणो वदेत् ततो वामहस्तोद्धृतं जलपात्रं दक्षिणेनादाय ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्पयत मे पितॄनिति पित्रादीनुद्दिश्य सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्रीभूय पिंडानाघ्राय उत्थापयेत् पिंडाधारकुशानुल्मुकं च वह्नौ प्रक्षिपेत् सव्येन देवार्घपात्रं संचाल्य अपसव्येन पित्राद्यर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् ततः सव्येन कुशत्रययवजलदक्षिणाद्रव्याण्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणां श्राद्धसंबंधिनां विश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति प्राङ्मुख उत्सृजेत् ततोऽपसव्यं कृत्वा दक्षिणामुखो मोटकतिलजलान्यादाय दक्षिणां चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां पितृब्राह्मणकरे दद्यात् ॐ स्वस्तीति प्रतिवचनम् पुनस्तथैव दक्षिणाद्रव्यादिमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य

सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुकगोत्र पितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणा
यदक्षिणां दातुमहमुत्सृजे इति पितामहश्राद्धदक्षिणां दद्यात् पुनर्दक्षिणाद्रव्यादिकमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रे
तस्य सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुकगोत्र प्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगो
त्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति प्रपितामहश्राद्धदक्षिणां दद्यात् पुनर्दक्षिणाद्रव्यादिकमादाय ॐ अद्यामुकगोत्रस्य
पितुरमुकप्रेतस्य सपिण्डीकरण निमित्तकश्राद्धे कृतैतदमुकगोत्र वृद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदै
वतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति वृद्धप्रपितामहश्राद्धदक्षिणां दद्यात् ततः सव्यं कृत्वा ॐ विश्वेदे
वाः प्रीयन्तामिति देवविसर्जनं कृत्वा अपसव्यं कृत्वा पितृश्राद्धब्राह्मणम् ॐ निरोंकारं स्वस्ति ब्रूहीति वदेत् स्वस्तीति तेनोक्ते स्वस्त्य
स्तु इति पितृब्राह्मणं विसृज्य गृहीतपितृब्राह्मणांगुष्ठो गृहीतोदकपात्रो वहिर्निमंत्रणस्थानमागत्य ब्राह्मणं स्थापयित्वा ॐ
आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा मातरा चा मा सोमो ऽमृतत्वेन गम्यादिति प्रदक्षिणी कु
र्वन् पूर्ववदुदकधारया निर्वेष्टयेत् ततः प्रणम्याशेषोपादाननुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् ततः सव्यं कृत्वा ॐ देवताभ्य इ
ति त्रिर्जपेत् ततो गृहं प्रविश्य सव्यापसव्याभ्यां देवपितृश्राद्धदीपान् पाणिभ्यां निर्वापयेत् ततः सव्येन पाणिपादप्रक्षालनमाच
मनं च कुर्यात् ततः ॐ प्रमादादित्यादि पठित्वा एतत्फलकामो विष्णुं स्मरेत् अपरश्राद्धचतुष्टयद्रव्यप्रतिपत्तिं ब्राह्मणाय कुर्या
त् पिण्डान् जले प्रतिपादयेत् उच्छिष्टमार्जनं कुर्यात् वैश्वदेवबल्यनन्तरं दशप्रभृति श्रोत्रियान् यथाशक्ति भोजयेत् ज्ञातिभि

र्मिलित्वा सह भोजयेत् ॥ इति श्राद्धविवेके सपिंडनपद्धतिः ॥ सपिंडीकरणकालव्यवस्थायामपि वत्सराभ्यंतरे चैतानि षोडशश्राद्धानि
केनचिद्धिस्मरणादिना न कृतानि तेन कृष्णैकादश्यां तन्मृताहे वा षोडशश्राद्धानि कर्तव्यानीति मिताक्षरा श्राद्धपल्लवयोर्लिखितम्
युक्तं चैतत् एकोद्दिष्टरूपश्राद्धस्य कृष्णैकादश्यां विधानात् एषां चैकोद्दिष्टरूपत्वात् अथवाधिकारिणि कृतषोडशश्राद्धसंकल्पे
सपिण्डनमकृत्वा विपन्ने कनिष्ठेनावशिष्टश्राद्धानि कार्याणीति श्राद्धप्रदीपः एषु सर्वेषु प्रेतश्राद्धादिषु शेषान्नभोजनं कर्तव्यं
यदाह देवलः एकोद्दिष्टस्य शेषं तु ब्राह्मणाय समुत्सृजेत् ततः परं तु भुंजीत स्वयं मंगलभोजनम् अस्यार्थः प्रेतश्राद्धार्थं यत्किंचि
त्साधितमोदनादि तत्सर्वं ब्राह्मणायैव प्रतिपादयेत् नोद्धारयेत् स्वयं मंगलभोजनं कुर्य्यात् पृथक्पाकसाधितान्नभोजनं कुर्य्यात् पृथक्पाकस्य मं
गलस्वरूपत्वात् सपिण्डने पितामहादिश्राद्धशेषान्नस्यैकपाकसाधितत्वात् प्रेतश्राद्धशेषान्नत्वादेव त्यागः सपिण्डनानंतरं वर्षद्वयं यावत् श्राद्ध
दत्तशेषान्नस्यापि भोजनं न कर्तव्यम् तथा च श्राद्धान्नभोजननिषेधे शातातपः नवश्राद्धं ग्रामयाजकान्नं संग्रहभोजनम् नारीणां प्रथमे गर्भे भुक्त्वा
चांद्रायणं चरेत् चांद्रायणं नवश्राद्धे पराको मासिके मतः मासत्रये तिकृच्छ्रः स्यात् षाण्मासे कृच्छ्र एव हि आब्दिके कृच्छ्रपादः स्यादेकाहः पुन
राब्दिके अतऊर्द्धं न दोषः स्यात् शंखस्य वचनं यथा उक्तं नवश्राद्धमेकादशाहश्राद्धम् ग्रामयाजकान्नं प्रसिद्धमेव संग्रहभोजनम् चंद्रसूर्ययोरु
परागकाले भोजनम् नारीणां प्रथमगर्भसंस्कारभोजनम् आब्दिके प्रथमसांवत्सरिके पुनराब्दिके द्वितीयसांवत्सरिके तदुपकरणवस्त्रादि
ग्रहणं वर्षद्वये पि कुर्वंतीति समाचारः स्त्रीशूद्रकर्तृकेऽस्मिन् श्राद्धे स्वधास्थाने नमः पदप्रयोगः कर्तव्यः स्त्रियः सपिंडने जीवति पत्यौ श्व
श्रादिभिः सपिण्डनं कार्यम् मृते पत्यौ पतिश्वश्रुरादिभिः सह मेलनं कार्यम् पतिपुत्ररहितायाः सपिण्डनमेव निषिद्धम् तथा च मार्कण्डेय

पुत्रेण सपिण्डीकरणे तासां पुत्राभावेन विद्यते अत्र पुत्राभाव इत्युपलक्षणम् पतिपुत्राभावे इति द्रष्टव्यम् पतिकर्तृकस्य स्त्रीसपिंडनस्य विधा
नात् एवं सपत्नीपुत्रे विद्यमाने स्त्रियः सपिण्डनं भवति बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत् इ
ति सपत्नीपुत्रवत्साः पुत्रिणीत्वातिदेशेनापुत्रत्वाभावात् एवं त्रैवर्णिकजातस्य शूद्रस्य सपिंडनं निषिद्धम् नीयते तु सपिंडत्वं येषां शूद्रकु
लोद्भवैः सर्वे शूद्रत्वमायांति यदि स्वर्गजितोपि ते इति शंखलिखितवाक्यात् यत्र च सपिंडनं निषिद्धं तत्र ब्रह्मपुराणोक्त षोडशश्राद्धैः प्रेत
त्वविमुक्तिः तथा च ब्रह्मपुराणे नृणां तु त्यक्तदेहानां श्राद्धानि षोडशसंख्यया चतुर्थे पंचमे चैव नवमैकादशे तथा ततो द्वादशभिर्मासैः श्राद्धं
द्वादशसंख्यया कर्तव्यं शुचिभिस्तेषां ततो विप्रांश्च भोजयेदिति अत्र च मृतकार्येषु मरणदिनावधिक दिनमासादिगणनाच्चतुर्थदिनादि
त्वं मरणदिनावधिकमेव ज्ञेयम् तथा चाशौचाभ्यंतरेपि चतुर्थदिनादिषु श्राद्धं कर्तव्यं अत्र च वर्षं यावत्सपिंडनकालेषु निषिद्धनक्षत्र सं
भवे निषिद्धनक्षत्रे सपिंडननिषेधात् तत्रापि ब्रह्मपुराणीय षोडशश्राद्धानि कर्तव्यानीति बहुषु निबंधेषु लिखितम् लोकास्तु निषिद्ध
नक्षत्रेपि सपिंडनकरणे पित्रादिगतकुलदोषाभावात्तन्मात्रगतानिष्टसंभवान्नक्षत्रानुरोधं नाचरंति अत्र वीरण्याः सपिंडकर्तृक षो
डशश्राद्धविधिर्लिख्यते तत्र सपिंडेनाशौचाभ्यंतर एव चतुर्थदिने श्राद्धं कर्तव्यम् तत्र प्रथमतोस्थिसंचयनिमित्तकमेकोद्दिष्टं कृत्वा
ऽस्थिसंचये कृते पुनः स्नात्वा श्राद्धं कर्तव्यम् तत्र मध्याह्ने शुचिराचांतो यजमानः सवर्णेनाहूतं ब्राह्मणं स्नातमाचांतं गोमयोपलिप्तायां मं
डपाद्बहिर्भूमौ गोमूत्रेणापसव्यवत् कृतमंडलायाम् ॐ भूम्यै नम इति निरक्षतपुष्पपूजितायामास्तृतदक्षिणाग्रकुशत्रयायां ति
ष्ठन् स्वागतमिति पृच्छेत् ॐ सुस्वागतमिति तेनोक्ते उभावप्युपविशतः ततः पुटके जलं कृत्वा ॐ इदं ते पाद्यमित्युपनीय पात्रं ब्राह्म

णपादयोर्दद्यात् ततोऽपसव्यंकृत्वापुष्पचंदनतांबूलानिब्राह्मणायदत्वाब्राह्मणदक्षिणजानुदक्षिणकरेणस्पृष्ट्वाॐअद्यामुकगोत्रा
याःसपिण्डायाअमुकप्रेतायाश्चतुर्थदिनश्राद्धकरणायभवंतंब्राह्मणमहमामंत्रयेॐआमंत्रितोस्मीतिप्रतिवचनम् ॐअक्रोधनैरित्या
दिनाॐसर्वोयासविनिर्मुक्तैरित्यादिनाचनियमान्श्रावयेत् ॐभवितव्यमितितेनोक्तेजलतिलगंधपुष्पाणिपृष्ठेकृत्वाॐअद्यामु
कगोत्रेसपिण्डेऽमुकप्रेतेचतुर्थदिनश्राद्धएषपादार्घस्तेमयादीयतेतवोपतिष्ठतामितिमोदकादिनापादार्घंदद्यात् ततआचम
नीयजलंनमस्कृत्यजानुनीविस्राव्यॐइदंतेआचमनीयमित्याचमनीयंसमर्पयेत् ततःसव्येनस्वयमाचम्यतमाचमय्याग्रेकृत्वा
श्राद्धदेशमागच्छेत् तत्रप्राङ्मुखउपविशेत् ॐसिद्धमितिवदेत् तत्रासनेऽत्रास्वेतिब्राह्मणमंगुष्ठेनगृहीत्वासकुशेआसनेउत्तरा
भिमुखमुपवेशयेत् पादयोस्तलेदक्षिणाग्रंकुशत्रयंदद्यात् आसनसमीपेतुतिलतैलेनरक्षादीपंस्थापयेत् ततःॐअपवित्रइत्या
दिपठित्वाॐपुंडरीकाक्षःपुनात्वितिकुशत्रयजलेनसर्वाणिश्राद्धीयद्रव्याणिसिंचयेत् ततःकुशत्रयतिलजलान्यादायॐअद्या
मुकगोत्रायाःसपिंडाया अमुकप्रेतायाःप्रेतत्वविमुक्तिकामअद्यादियथाकालंषोडशश्राद्धान्यहंकरिष्ये इतिसंकल्पयेत् पुनः
कुशत्रयतिलजलान्यादायॐअद्यामुकगोत्रायाःसपिण्डायाअमुकप्रेतायाःप्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतचतुर्थदिन
श्राद्धमहंकरिष्येइतिवदेत् ॐकुरुष्वेतिप्रतिवचनं ॐगायत्रीजपमहंकरिष्येइति ॐकुरुष्वेति तत्प्रतिवचनम् ततःसप्रणवव्या
हृतिगायत्रींत्रिर्जपित्वाॐदेवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वामोदकादीन्यादायॐअद्यामुकगोत्रेसपिण्डेऽमुकप्रेते
चतुर्थदिनश्राद्धइदमासनंतेमयादीयतेतवोपतिष्ठतामित्यासनमुत्सृजेत् तत ॐअपहताइत्यादिनाश्राद्धदेशेवामावर्तेन

तिलान् विकिरेत् ततः आयंतु न इतिमंत्रं जपेत् ततोऽर्घपात्रे पवित्रं कृत्वा ॐ शन्नो देवीरिति जलं तिलोसीति स्वाहांते न तिलान् क्षिप्त्वा तूष्णीं गंधपु
ष्पे क्षिपेत् ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रं पात्रं ब्राह्मणकरे उत्तराग्रं धृत्वा तदुपरि उदकांतरं दत्वा ॐ या दिव्या इति पठित्वा मोटकादीन्यादाय॰
ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थ दिनश्राद्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति विप्रकरेऽर्घजलं दद्यात् उत्सृजेत् ततस्त
दर्घपात्रं पवित्रसहितं ब्राह्मणवामपार्श्वे ॐ सपिण्डायै स्थानमसीति न्युब्जीकरणम् ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्रे सपिंडे
ऽमुकप्रेते चतुर्थदिनश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलसिंदूरवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादीनुत्सृजेत् ततः
पात्रस्य चतुर्दिशं चतुष्कोणं मंडलं कुर्यात् ततः श्राद्धीयान्नव्यंजनाग्रभागं गृहीत्वा घृततिलजलसहितं तदन्नं ॐ इदमन्नमेतद्भू
स्वामि पितृभ्यो नमः इति मोटकादिना दद्यात् ततः कराभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा मनाक् स्थित्वा सपिंडान् ध्यात्वा भोज
नपात्रे पुरुषतः क्षिप्तमन्नं परिविष्यात् पुटकांतरेषु व्यंजनानि घृतं जलं चोपनीय अन्नोपरि पुटकादिना हस्ताभ्यां मधु दद्यात् ॐ
मधुवाता ऋतायते इति त्र्यृचं मधु मधु मध्विति च जपेत् ततो व्यस्तानुत्तानपाणिभ्यामन्नपात्रमालभ्य ॐ पृथिवी ते पात्रमित्यादि
जपित्वा ॐ इदं विष्णुरिति पठन्न मतरूपतयान्नं विचिंत्य ॐ कृष्ण कव्यमिदमिति पठित्वा ॐ इदमन्नं ॐ इमा आपः ॐ इदमा
ज्यं ॐ इदं कविरिति पात्रं ब्राह्मणदक्षिणहस्तांगुष्ठमन्नजलघृतान्नेषु निवेश्य ॐ अपहता इत्यादिनान्नोपरि बहूंस्तिलान्विकीर्य॥
वामेन पाणिना पात्रमत्यजन् ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्ध इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठता
मित्यन्नमुत्सृजेत् ॐ भवानप्राशयत्विति ब्राह्मणाय जलगंडूषं दद्यात् ततो गायत्रीं मधुवाता इत्यादि त्र्यृचं ॐ मधु मधु मध्विति च ज

श्रा० पित्वा ॐ अन्नहीनमित्यादि पठित्वा ॐ यथासुखं जुषस्वेति ब्राह्मणं ब्रूयात् ब्राह्मणो वामेन पाणिना पात्रमस्पृशन् ॐकारं पूर्वं भुंजीत तत्रा
वि० क्रोधादिकं वर्जयेत् व्यंजनाद्यर्थं हस्तादिना संज्ञामपि न कुर्यात् श्राद्धकर्ता दर्भेष्वासीनो गायत्रीं मधुवातादिकं जपेत् ब्राह्मणं गाय
५१ त्रीमनुश्रावयेत् ॐ कृणुष्व पाज इत्यादि रक्षोघ्नमंत्रान् पठेत् भूमौ तिलान् विकीर्य ब्राह्मणं सपिंडरूपतया ध्या— येत् ॐ उदीरतामित्यादि
मंत्रान् ॐ सहस्रशीर्षा इत्यादि पुरुषसूक्तं ॐ आशुः शिशान इत्यादिकमप्रतिरथं मन्यानि च शतरुद्रीयरुचिस्तवमभर्तीनि पवित्राणि ज
पेत् ततः ॐ नमस्तुभ्यं विरूपाक्षेत्यादि श्लोकमपि पठेत् वीणादिभिः ब्राह्मणं हर्षयेत् ॥ व्यंजनगुणानुत्कीर्तयन् मंदं मंदमुपनयन् ब्रा
ह्मणं भोजयेत् ततस्तृप्तं ज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य मधुतिलघृतव्यंजनयुतमन्नं जलेनाप्ला
व्य ॐ अनग्निदग्धा इति मंत्रेण कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाचम्य विष्णुं स्मरेत् अपसव्यं कृत्वा इदं ते प्रत्यापोशानमि
ति जलगंडूषं ब्राह्मणाय दत्त्वा ॐ स्वदितमिति पृच्छेत् ॐ सुस्वदितमिति नोक्ते ॐ पिंडमहं करिष्य इति पृच्छेत् ॐ कुरुष्वेत्यनुज्ञातो ह
स्तमात्रपरिमितां पिंडिकां मृत्तिकामयीं निर्माय तन्मध्ये प्रादेशमितां रेखां वामेन पाणिना दर्भपिंजुलीमादाय हस्ताभ्यां गृहीत्वा तन्मू
लेन दक्षिणाग्रे रेखां कुर्यात् दर्भपिंजुलीमुत्तरस्यां दिशि क्षिपेत् ये रूपाणीति तत्रांगारभ्रामणं कृत्वांगारं दक्षिणस्यां दिशि क्षिपेत् रेखो श्रा०
परि उपमूललूनान् कुशान् दक्षिणाग्रानास्तीर्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् अपसव्यं कृत्वा जलतिलगंधपुष्पाणि पुट ५१
के कृत्वा वामहस्तेन तमादाय दक्षिणहस्तेन मोदकादीन्यादाय ॐ अद्यामुकगोत्रे सपिंडेऽमुकप्रेते चतुर्थदिनश्राद्धे पिंडस्थानेऽत्रा
वनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशमध्येऽवनेजनं दद्यात् ततो मोदकादीन्यादाय पिंडं चादाय ॐ अद्यामुकगोत्रे स

पिंडेऽमुकप्रेतेचतुर्थदिनश्राद्धे एष पिण्डस्ते मयादीयते तत्रोपतिष्ठतामिति कुशमध्ये पिण्डं दद्यात् तत आस्तृतकुशमूले करं प्रोक्ष्य
सव्यंकृत्वाचम्य हरिंस्मृत्वा ॐअत्र सपिंडेमादयस्व यथाभागमावृषायस्वेति दक्षिणामुखः पठेत् तत उदङ्मुखीभूय श्वासं नियम्य॥
भास्वरमूर्तिंध्यायन् ॐअमीमदंत सपिंडे यथाभागमावृषायिषेति पठन् मुखं प्रत्यावर्तयेत् मोदकादीन्यादाय वामहस्तेऽवनेजन
पुटकंधृत्वा ॐअद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे ऽत्रमत्स्यवनेनिक्ष्व ते मयादीयते तत्रोपतिष्ठतामिति पिंडोप
रि प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रंस्य परिधाय सव्यंकृत्वाचामेत् अपसव्यंकृत्वा वामेन पाणिनोद्धृतं सूत्रम् दक्षिणेनादा
य ॐएतत्ते सपिंडे वासइति पिंडोपरि हस्ताभ्यां दद्यात् मोदकादीन्यादाय ॐअद्यामुकगोत्रे सपिंडेऽमुकप्रेते चतुर्थदिनश्राद्धपिं
ड एतद्वासस्ते मयादीयते तत्रोपतिष्ठतामित्युत्सृजेत् ततो गंधपुष्पधूपदीपतांबूलैः पिंडमर्चयेत् पिण्डशेषान्नं पिंडसमीपे वि
किरेत् ॐशिवा आपः संत्विति आचांतब्राह्मणकरे जलदानं ॐसंत्विति प्रतिवचनम् ॐसौमनस्यमस्त्विति पुष्पम् ॐअस्त्वि
ति प्रतिवचनम् ॐअक्षतंचारिष्टमस्त्विति तंडुलदानं ॐअस्त्विति प्रतिवचनम् मोदकादीन्यादाय ॐअद्यामुकगोत्रायाः स
पिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकदानं ब्राह्मणकरे दद्यात् ॐउपति
ष्ठतामिति प्रतिवचनम् ततः सव्यंकृत्वा सुमनास्तन्मना दक्षिणां दिशं पश्यन् ॐअघोराः सपिंडास्त्विति पूर्वाग्रां जलधारां दद्या
त् ॐअस्त्विति प्रतिवचनम् पूर्वाभिमुखो भूत्वा ॐगोत्रं नो वर्द्धतामित्याशिषं ब्राह्मणं याचेत् ॐवर्द्धतामिति तेनोक्ते ॐदातारो
नोभिवर्द्धतामित्यादिनाशीः प्रार्थनम् ॐसंत्विति प्रतिवचनम् अपसव्यं कृत्वा पिंडोपरि सपवित्रकुशानास्तीर्य दक्षिणाग्रान्

ॐनमोवाचमिष्येइतिब्राह्मणंब्रूयात ॐवाच्यतामित्युक्ते ॐसपिण्डायेनमः उच्यतामितिवदेत ॐअस्तुनमइत्युक्ते पुटकादिस्थितंजलं
हस्ताभ्यामादाय ॐऊर्ज्जंवहन्तीरितिमंत्रेण सपवित्रकुशोपरि दक्षिणाग्रवारिधारां दद्यात् ततोनम्रीभूय पिंडमाघ्रायोत्थापये
त् पिंडाधारकुशानुल्मुकंचवह्नौनिःक्षिपेत् अर्घपात्रमुत्तानीकृत्य ततोमोदकादिकंदक्षिणाद्रव्यंचादाय ॐअद्यामुकगोत्रायाःसपिं
डाया अमुकप्रेतायाःकृतैतच्चतुर्थदिनश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायदक्षिणांतुभ्य
महंसंप्रददेइतिदद्यात ॐनिरंकारंस्वस्तिब्रूहीतिब्राह्मणंवदेत् स्वस्तीतिब्राह्मणेनोक्ते स्वस्त्यस्त्वित्युक्त्वाब्राह्मणहस्तांगु
ष्ठंगृहीत्वोत्थापयेत् तंगृहीत्वाजलपात्रंचगृहीत्वा निमन्त्रणस्थानेस्थापयेत् ॐआमावाजस्यप्रसवो जगम्यादेमेद्यावापृथि
वीविश्वरूपे आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यादितिमंत्रेणवारिधारयाब्राह्मणंनिर्वेष्टयेत् प्रणम्याष्टौ
पादाननुव्रज्यप्रदक्षिणीकृत्यनमस्कुर्यात ततउपविश्य तत्रैवसव्यंदेवताभ्यइतित्रिर्जपेत् ततःश्राद्धदेशमागत्यपाणिभ्यां
दीपंनिर्वाप्य सव्यंकृत्वा हस्तौपादौप्रक्षाल्याचम्य ततॐप्रमादादित्यादिपठित्वा श्राद्धपूर्तिकामो विष्णुंस्मरेत् पिण्डादिकं
जलेक्षिपेत् उच्छिष्टापनयनंकुर्यात् दशप्रभृतिश्रोत्रियान् भोजयेत् बंधुभिर्मिलित्वास्वयंभुंजीत अनेनैवप्रकारेणपंचम
दिनेपंचमदिनश्राद्धं नवमदिनेनवमदिनश्राद्धं एकादशाहे एकादशदिनश्राद्धंकुर्यात् चतुर्थदिनेविगोत्रोयदिश्राद्धक
र्तातदातस्याशौचांतद्वितीयदिनत्वात्तत्रशय्यादानकांचनपुरुषदानदंपतिपूजनंवृषोत्सर्गकपिलादानानिकुर्यात् सपिंडोयदिश्राद्धक
र्तातदातेनैकादशाहेऽशौचांतद्वितीयदिनेशय्यादानदंपतिपूजनवृषोत्सर्गादिकंचकर्तव्यंभवतीति अनेनैवप्रकारेण प्रथममासमार

म्यद्वादशमासपर्यंतं प्रतिमासशेषे सति तस्याहे प्रथममासिकद्वितीयमासिकतृतीयमासिकचतुर्थमासिकपंचममासिकषष्ठमासिकस
प्तममासिकाष्टममासिकनवममासिकदशममासिकैकादशमासिकद्वादशमासिकानि कर्तव्यानीति अधिकमाससंभवे त्रयोदश
मासिकानि कर्तव्यानि अस्मिन् ब्रह्मपुराणीयकल्पे मासिकानामपकर्षकरणं न भवति प्रमाणाभावादिति ॥ इति श्रीश्राद्धवि
वेके मध्यक्रियापरिच्छेदस्तृतीयः ३ ॥ अथाब्दिकैकोद्दिष्टश्राद्धप्रयोगः ॥ तत्र पूर्वदिने कृतनियमः श्राद्धदिने प्रातर्वस्त्रयु
ग्मेन कृतस्नानः पंचगव्योपलेपनज्वलदंगारभ्रामणगोरमृत्तिकाच्छादनैः श्राद्धभूमिसंस्कारं कृत्वा वस्त्रादिना वेष्टयित्वा तिलगौरसर्ष
पैरवकीर्य्य पित्रासनस्थानाद्वामभागे श्राद्धदेयवस्तून्यासाद्य कृतस्नानादिर्मध्याह्ने शुचिः शुक्लद्विवासाः पादौ प्रक्षाल्याचम्य श्रा
द्धदेशमागच्छेत् तत्र स्वयं पाकं कुर्यात् सपिण्डस्त्रीद्वारा वा पाचयेत् ततः पाके कृते रक्षादीपं निधाय पुनराचम्य प्राङ्मुख उपविशे
त् अन्यकृते पाके सिद्धमिति पृष्ट्वा ॐ अपवित्रः पवित्रो वेत्यादि ॐ पुंडरीकाक्षः पुनात्विति पठित्वा कुशत्रयजलैः श्राद्धवस्तून्यभिषिंचे
त् ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथौ अमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैको
द्दिष्टश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ततो गायत्रीं त्रिर्जपित्वा ॐ देवताभ्य इत्या दि त्रिर्जपेत् ततोऽपसव्यं कृत्वा दक्षिणामुखः
पातितवामजानुः मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्ध इदमासनं ते स्वधेति पूर्वो
पकल्पितं मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रं पितृतीर्थेनोत्सृजेत् ॐ अपहतेत्यादिना भोजनपात्रे तिलान्विकीर्य्य ॥
ॐ आयंतु न इत्यादि पठित्वा ततोऽर्घकरणम् ॥ पुटकादौ दक्षिणाग्रं पवित्रं धृत्वा ॐ शन्नो देवीरिति मंत्रेण जलं प्रक्षिप्य ॐ तिलोसि

ति तिलान् प्रक्षिप्य गंधपुष्पे तूष्णीं क्षिपेत् ततोऽर्घपात्रं वामहस्ते कृत्वा भोजनपात्रे पवित्रमुत्तराग्रं धृत्वा तदुपरि उदकान्तरं दत्वा ॐ या
दिव्या इति पठित्वा ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष हस्तार्घः स्वधेति पवित्रोपरि जलं यथा पतति तथै
वमुत्सृजेत् ततः पवित्रयुतं तदर्घपात्रमवशिष्टजलयुतमेवासनवामभागे ॐ पित्रे स्थानमसीति न्युब्जीकुर्यात् दक्षिणाद्दानप
र्यन्तं नोद्धरेत् न चालयेत् ततो गंधादि दद्यात् ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकै
कोद्दिष्टश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते स्वधेति गंधादीन् दद्यात् ततो जलेन भोजनपात्रासनयो
श्चतुर्दिशं मंडलं कृत्वा सव्यंजनं सघृततिलजलमन्नं किंचिदग्रभागमुद्धृत्य मोटकादिना ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः
इति भूस्वामिनेऽन्नं दद्यात् ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय पितरं ध्यायन् मंदं मंदं परिवेषणं कुर्यात् ततः पु
रुषाहारक्षममन्नं परिविष्य यथासंभवं व्यंजनमन्नं जलं घृतं च पात्रांतरस्थं तत्रोपनीय अन्नं मधुनाभिघार्य ॐ मधुवाता इत्यादि त्र्य
चं मधु मधु मध्विति च जपित्वा पात्रमालभेत् ततः सव्येन हस्तेन पात्रं पश्चिमभागे स्पृशन् तदुपरिगतदक्षिणहस्तेनाधोमुखेन पूर्व
भागे पात्रं स्पृशन् ॐ पृथिवी ते पात्रमित्यादि ॐ इदं विष्णुरित्यादि ॐ कृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा वामेन पाणिना पात्रं
स्पृशन्नेव दक्षिणं पाणिमुद्धृत्य ॐ इदमन्नं ॐ इमा आपः ॐ इदमाज्यं ॐ इदं हविरित्यन्ने जले घृते पुनरन्ने चांगुष्ठं निक्षिप्य ॐ अपहता
इत्यादि नान्नोपरि तिलान्विकीर्य मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राय पित्रेऽमुकशर्मणे सांवत्सरिकैकोद्दिष्टश्राद्धे एतद
न्नं सोपकरणं स्वधेत्युत्सृजेत् ततो वामहस्तमप्युद्धृत्य ॐ अन्नहीनमित्यादि पठित्वा ॐ गायत्रीं त्रिर्जपेत् कुशेषूपविश्य ॐ मधुवाता इत्या

द्विजयेत् ततः कृणुष्व पाजइत्याद्यारक्षोघ्नीर्ऋचोजपित्वा भूमौ तिलान् विकीर्य पितरं ध्यात्वा ॐ उदीरतामवर इत्यादि पितृमंत्रान् स
हस्रशीर्षा इत्यादि पुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकमप्रतिरथं च जपेत् यथाशक्त्यान्यान्यपि पवित्राणि जपेत् रुचिस्तवादी
नि च जपेत् ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नम इति पठित्वा उच्छिष्टसमीपे दक्षि
णाग्रं कुशत्रयमास्तीर्य्य जलेन सिक्त्वा किंचिदन्नं सघृततिलं जलसिक्तमादाय ॐ अनग्निदग्धा इत्यादिमंत्रस्य फलमुद्दिश्य कुशो
परि अन्नं विकिरेत् ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा गायत्रीं मधुवाता इत्यादिकं मधु मधु मध्विति च जपेत् ततोऽपसव्यं कृत्वा ह
स्तमात्रचतुरंगुलोच्छ्रितदक्षिणाप्लव पिण्डिकायां प्रादेशमात्रं परिमाय दर्भपिंजुल्या दक्षिणांगुष्ठतर्ज्जनीधृतमूलया वामह
स्तांगुष्ठतर्जनीधृताोपरिभागया ॐ अपहताऽअसुरा रक्षांऽसि वेदिषद इति प्रादेशमात्रमुल्लिख्य दर्भपिंजुलीमुत्तरस्यां दिशि
त्यजेत् ॐ ये रूपाणीत्यादिनांगारं भ्रामयित्वा अंगारं दक्षिणस्यां क्षिपेत् ततस्तत्र छिन्नमूलकुशत्रयमास्तीर्य सव्यं कृत्वा देवता
भ्य इति त्रिर्जपेत् ततः अपसव्यं कृत्वा तिलजलगंधपुष्पाणि पुटके कृत्वा पुटकं वामहस्ते धृत्वा मोटकतिलजलान्यादाय ॐ अ
द्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्व ते स्वधेति छिन्नमूलकुशोपरि अवनेजनं द
द्यात् किंचिज्जलं पुटकेऽवशेषयेत् ततः तिलजलव्यंजनघृतमिश्रैरन्नैः पिंडं बिल्वोपमं निर्माय मधुघृताभ्यामभिघार्य्य।
मोटकतिलजलसहितमादाय सव्योपगृहीतदक्षिणहस्तेन ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे
एषते पिण्डः स्वधेति छिन्नमूलकुशोपरि पिंडं दद्यात् ततः कुशमूले तूष्णीं करं प्रोक्ष्य सव्यं कृत्वा द्विराचामेत् हरिं स्मृत्वा अपस

व्यं कृत्वा दक्षिणामुखः ॐ अत्र पितरमादयस्व यथाभागमावृषायस्वेति पठित्वा उत्तराभिमुखीभूय श्वासं नियम्य पितरं ध्यायन् पुन
र्दक्षिणाभिमुखो भवन् ॐ अमीमदन्त पितरो यथाभागमावृषायिषतेति पठेत् ततः पूर्वदत्तावशिष्टजलयुतमत्यवनेजनजलपा
त्रमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेऽत्र प्रत्यवनेनिक्ष्व ते स्वधेति पिंडोपरि प्रत्यवने
जनं दद्यात् ततो नीवीं विस्रंस्य सव्येनाचम्यापसव्यं कृत्वा वामेन पाणिना सूत्रमादाय दक्षिणकरेण धृत्वा ॐ नमस्ते पितारसा
य नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितः पितर्नमस्ते ।
गृहान्नः पितर्देहि सतस्ते पितर्देष्म इति पठित्वा ॐ एतत्ते पितर्वास इति पिंडोपरि सूत्रं दद्यात् ततो मोटकतिलजलान्यादाय ।
ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्ड एतत्ते वासः स्वधेति सूत्रमुत्सृजेत् ततः पितरमुद्दिश्य पिंडे
तूष्णीं गंधपुष्पधूपदीपतांबूलानि दद्यात् ततः शिवा आपः संत्विति जलम् ॐ सौमनस्यमस्त्विति पुष्पम् ॐ अक्षतं चारिष्टमस्त्वि
ति तंडुलान् भोजनपात्रे क्षिपेत् ततश्च मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्रा
द्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् ततः सव्यं कृत्वा दक्षिणामुखः ॐ अघोरः पितास्त्विति पिण्डोप
रि पूर्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखः कृतांजलिः सुमनाः ॐ गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च श्र द्धा
च नो मा व्यगमद् बहु देयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आ
शिषः संतु इत्याशीः प्रार्थनं कृत्वा अपसव्यं कृत्वा सपवित्रकुशत्रयं दक्षिणाग्रं पिण्डोपरि धृत्वा ॐ ऊर्ज्जं वहन्तीरमृतमिति

मंत्रेण कुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्रीभूय पिण्डमाघ्राय उत्थापयेत् पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् अर्घपात्रमुत्ता
नीकृत्य दक्षिणां दद्यात् तथा मोदकादीन्यादाय रजतं च ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्र
तिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे यद्युपस्थितं रजतं न भवति तदा रक्तिकामितं
रजतं चन्द्रदैवतमित्येवमादिवाक्यं कर्तव्यं इदं पदं न दातव्यमिति शेषः ॥ ततः ॐ अभिरम्यतामिति विसर्जनम् ततः सव्यं कृत्वा देव
ताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिः पठेत् ततोऽपसव्यं कृत्वा पाणिभ्यां दीपं नि
र्वापयेत् ततो हस्तौ पादौ प्रक्षाल्य सव्यं कृत्वाचम्य ॐ ब्रह्मणे स्वाहा० ॐ प्रजा० ॐ गृह्याभ्यः स्वाहा० ॐ कश्यपाय स्वाहा० ॐ अनुमत
ये स्वाहा० ततो हुतशेषान्नेन बलिदानं ॐ पर्जन्याय नमः अद्भ्यो नमः पृथिव्यै नमः उदकसंधात्रे नमः विधात्रे नमः द्वार्ष्याभ्यां वाय
वे नमः इति प्रतिदिशं ॐ प्राच्यै नमः ॐ अवाच्यै नमः ॐ प्रतीच्यै नमः ॐ उदीच्यै नमः प्रति० ॐ ब्रह्मणे नमः ॐ अंतरिक्षाय० सूर्याय० ॥
इति मध्ये० ॐ दिग्भ्यो देवेभ्यो नमः ॐ विश्वेभ्यो भूतेभ्यो नमः ॐ उषसे नमः ॐ भूतानां पतये नमः इत्युत्तरोत्तरं ततः प्राचीनावीती दक्षि
णाभिमुखः पातितवामजानुः पितृतीर्थेन दक्षिणस्यां दिशि ॐ पितृभ्यः स्वधा नमः इति दद्यात् ततो बलिशेषान्नलिप्तपात्रं प्रक्षाल्य
यक्ष्मैतत्ते निर्णेजनं नमः इति वायव्यां दिशि दद्यात् देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः प्रेताः पिशाचास्तरवः
समस्ता ये चान्नमिच्छंति मया प्रदत्तम् पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मनिबंधबद्धाः प्रयांतु ते तृप्तिमिदं मयान्नं
तेभ्यो विसृष्टं सुखिनो भवंतु येषां न माता न पिता न बंधुर्नैवान्नसिद्धिर्न तथान्नमस्ति तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते यांतु तृप्तिं मुदि

तंजुहोमि स्वाहा ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे ॐ कृष्ण कव्यमिदं रक्षमदीयमिति पठेत् ततो दक्षिणहस्तमु
त्तानं तदंगुष्ठं ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इदं हविरिति पुनरन्ने निवेशयेत् ॐ अपहताऽ असुरा रक्षा
ꣳसि वेदिषद इत्यन्ने तिलान् क्षिपेत् ततो मोदकादीन्यादाय ॐ अद्यामुकगोत्रायै मात्रेऽमुकदेव्यै सांवत्सरिकैकोद्दिष्टश्राद्ध इदमन्नं सो
पकरणं स्वधा इत्यन्नमुत्सृजेत् ततः पात्रं त्यजेत् ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्त्विति पठित्वा गायत्रीं
त्रिर्जपित्वा कुशेषूपविश्य ॐ मधुवाता इति जपेत् ततः कृणुष्व पाज इत्यादि रक्षोघ्नीश्च जपेत् तिलान्भूमौ विकीर्य्य मातरं ध्यात्वा ॥
ॐ उदीरतामवर इत्यादि पित्र्यमंत्रान् सहस्रशीर्षेत्यादि पुरुषसूक्तम् ॐ आशुः शिशान इत्यादिकमप्रतिरथं अन्यानि च मंत्राणि जपे
त् तत उच्छिष्टसमीपे कुशत्रयमास्तीर्य्य जलेन प्रोक्ष्य सव्यंजनमन्नं सघृतं सतिलं जलप्रोक्षितमादाय ॐ अग्निदग्धाश्च ये जीवा येऽप्यद
ग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति कुशोपरि अन्नमुत्सृजेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा गायत्रीं मधुवा
तेति च जपेत् अपसव्यं कृत्वा वेदिकां कृत्वा पिण्डस्थाने प्रादेशमात्रं ॐ अपहताऽ असुरा रक्षाꣳसि वेदिषद इति मंत्रेण दर्भपिंजुल्या
उल्लिखेत् दर्भपिंजुलीमैशान्यां क्षिपेत् ततः ॐ ये रूपाणि प्रतिमुञ्चमानाऽ असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टा
ल्लोकात्प्रणुदात्यस्मादिति मंत्रेण रेखायामंगारं भ्रामयित्वा दक्षिणस्यां दिशि त्यजेत् ततस्तत्र छिन्नमूलकुशानास्तीर्य्य सव्यं कृत्वा देव
ताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पुटके जलतिलपुष्पगंधान्कृत्वा मोदकतिलजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकदे
वि सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते स्वधेति छिन्नमूलकुशोपरि अवनेजनं दद्यात् ततस्तिलघृतसहितान्नेन

पिण्डं कृत्वा मधुघृताभ्याम् अभिघार्य मोटकतिलजलपिण्डानादाय ओं अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्ध एष ते पि
ण्डस्स्वधेति पिण्डं सव्योपगृहीतं दक्षिणहस्तेन कुशोपरि दद्यात् ततः कुशमूले करं प्रोक्ष्य सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृ
त्वा दक्षिणामुखः ओं अत्र मातर्मादयस्व यथाभागमावृषायस्वेति पठेत् उदङ्मुखीभूय श्वासं मातरं ध्यायन् परावर्तमानः ओं अमीमदन्त
माता यथाभागमावृषायिषतेति पठेत् ततोऽवनेजनावशिष्टजलसहितं पुटकमादाय मोटकतिलजलान्यादाय ओं अद्यामुकगोत्रे मातर
मुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते स्वधा इति प्रत्यवनेजनं दद्यात् ततो नीवीविस्रंसं सव्यं कृत्वाचम्य अप
सव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय ओं नमस्ते मातारसाय नमस्ते मातः शोषाय नमस्ते मातर्जीवाय नमस्ते मातः स्वधायै
नमस्ते मातर्घोराय नमस्ते मातर्मन्यवे नमस्ते मातर्मातर्नमस्ते गृहान्नो मातर्देहि सतस्ते मातर्देष्म इति पठित्वा एतत्ते मातर्वास इति मन्त्रेण
पिंडोपरि सूत्रं धृत्वा मोटकतिलजलान्यादाय ओं अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे एतत्ते वासः स्वधेति सूत्र
मुत्सृजेत् ततः पिंडे गंधपुष्पधूपदीपतांबूलानि तूष्णीं दत्वा ओं शिवा आपः संत्विति जलं ओं सौमनस्यमस्त्विति पुष्पम् ओं अक्षतं चारिष्ट
मस्त्विति तंडुलान् भोजनपात्रे निक्षिपेत् ततो मोटकतिलजलान्यादाय ओं अद्यामुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्रा
द्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकमुत्सृजेत् ततः सव्यं कृत्वा दक्षिणामुखः ओं अघोरा मातास्तु इति पिंडोपरि पू
र्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखः कृतांजलिः ओं गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्ताम् वेदाः संततिरेव च श्रद्धा च नो मा व्यगम
द्बहुदेयं च नोस्त्विति अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः संतु इत्या

श्रीः प्रार्थनं कुर्यात् ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पिंडोपरि आस्तीर्य ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्प
यत मे मातरमिति कुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्रीभूय पिण्डमाघ्राय उत्थापयेत् पिण्डाधारकुशानुल्मुकं च हुतौ निक्षिप्य
दीपाद्युत्तानीकृत्य दक्षिणां दद्यात् ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्रा
द्धप्रतिष्ठार्थं रक्तिकापरिमितरजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति यथावैभवं दद्यात् ॐ अ
भिरम्यतामिति विसर्जनम् ततः सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् ॥ ततोऽपसव्यं कृत्वा हस्ताभ्यां दीपं निर्वाप्य हस्तौ पादौ प्रक्षा
ल्य सव्येनाचम्य ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरित्युक्त्वा श्राद्धसंपूर्णकामो
विष्णुं स्मरेत् ततः श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् तत इष्टैः सह शेषभोजनम् एवं पत्न्यादिश्राद्धं पत्न्यादि
संबंधिनाम्नोल्लेखे विशेषः शस्त्रादिहतनिमित्तकेऽपि एकोद्दिष्ट एवमेव प्रयोगः सांवत्सरिकपदं तत्र न दातव्यम् तद्यथा आश्विन
कृष्णचतुर्दश्यां तिथावमुकगोत्राया मातुरमुकदेव्या एकोद्दिष्टश्राद्धमहं करिष्य इति संकल्पं कुर्यात् ॐ अद्यामुकगोत्रे मातुरमुकदेवि
एकोद्दिष्टश्राद्ध इदमासनं ते स्वधा इत्येवमाद्युत्सर्गवाक्यम् इत्येकोद्दिष्टप्रयोगः ॥ अथ स्त्रीकर्तृकश्राद्धप्रयोगः ॥ स्नाता शुक्लवस्त्र
युगधारिणी मध्याह्ने सुसमाहृतपञ्चगव्योपलेपितं ज्वलदंगारशोधितं गोरमृत्तिकाच्छादितं यथाप्रादेशमासादितश्राद्धीयद्रव्यं ज्व
लितदीपं विकीर्णतिलगौरसर्षपं श्राद्धदेशमागत्याचम्यासने प्राङ्मुखी उपविशेत् पाचिकां तरपक्षे सिद्धमिति पाचिकाः पृच्छेत् ०
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः पुंडरीकाक्षः पुनात्विति कुशत्रयजलेन श्रा

द्दीपद्रव्याणि सिंचेत् ततः कुशत्रयतिलजलान्यादाय ॥ अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं क-
रिष्ये इति संकल्पयेत् ततः देवताभ्यः इति त्रिर्जपेत् ततो दक्षिणाभिमुखी पातितवामजानु मोटकतिलजलान्यादाय ॥ अद्यामु-
कगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्ध इदमासनं ते नमः इति पितृतीर्थेन मोटकरूपमासनमुत्सृजेत् ततस्तूष्णीं
भोजनपात्रे तिलान् प्रक्षिप्य अर्घपात्रे पवित्रधारणं जलप्रक्षेपस्तिलगंधपुष्पप्रक्षेपश्च ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रमु-
त्तराग्रं भोजनपात्रे धृत्वा तदुपरि उदकांतरं दत्वा मोटकादीन्यादाय ॥ अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्ध
एष ते हस्तार्घो नमः इत्यर्घं पवित्रोपरि ददत् उत्सृजेत् ततोऽवशिष्टजलपवित्रसहितमर्घपात्रमासनवामभागे पत्युः स्थानमसीति
न्युब्जीकुर्यात् ततो गंधादिदानम् मोटकतिलजलान्यादाय ॥ अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि
गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते नमः ततो जलेनासनसहितं भोजनपात्रं मंडलेन वेष्टयेत् श्राद्धीयान्नाग्रभागं स-
व्यंजनं सतिलजलं पुटकादौ कृत्वा मोटकादीन्यादाय इदमन्नमेतद्भूस्वामिपितृभ्यो नमः इति भूस्वामिनेऽन्नं दद्यात् ततस्ताम्रपात्र-
स्थितमन्नं कराभ्यामादाय पतिं ध्यायती परिवेषयेत् जलं घृतं व्यंजनं पुटकांतरस्थं तत्रोपनीय अन्ने मधु दत्वा मधु मधु मध्वि-
ति च जपेत् ततः उभाभ्यां न्यस्ताभ्यां हस्ताभ्यां भोजनपात्रमालभ्यान्नममृततया चिंतयेत् कव्यकव्यमिदं रक्षमक्षीयमिति पठित्वा
दक्षिणहस्तमुत्तानं कृत्वा अंगुष्ठमिदमन्नं इमा आपः इदमाज्यमिति अन्नजलघृतेषु निक्षिप्य इदं हविरिति पुनरन्नेऽगुष्ठं निक्षिप्य ॥
अन्नोपरि तिलान्विकीर्य मोटकादीन्यादाय — अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्ध इदमन्नं सोपकरणं ते न-

श्रा० मः इत्यन्नमुत्सृजेत् ततोवामहस्तमप्युतोत्थानहीनमित्यादि पठित्वा ततोभूमौ तिलान्विकीर्य दर्भेषूपविश्य नीलकंठस्तुतिं विस्तवादी
वि० नि पठेत् अशक्तौ नमस्तुभ्यं विरूपाक्ष इति श्लोकमपि पठेत् ततउच्छिष्टसन्निधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य सतिलजलप्रोक्षितं सव्यंजनघृ
५८ तमन्नमादाय अनग्निदग्धा इति पठित्वा कुशोपरि कुणादिना विकिरेत् ततः आचम्य हरिं स्मृत्वा दक्षिणामुखी पिण्डस्थाने प्रादेशमात्रं परिमाय करे
धृत तर्जन्यंगुष्ठधृत तन्मूलया दर्भपिंजुल्या तदुत्थित्य दर्भपिंजुलीमुत्तरतः क्षिपेत् ततस्तत्र ज्वलदंगारं भ्रामयित्वा दक्षिणस्यां दिशि क्षिपेत्
ततस्तत्र छिन्नमूलकुशत्रयमास्तीर्य प्राङ्मुखी देवताभ्य इत्यादि त्रिः पठेत् ततो दक्षिणामुखी पुटके तिलजलगंधपुष्पाणि कृत्वा पाणिना मो
दकान्यादाय॥ अद्यामुकगोत्र पते ऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थाने ऽत्रावनेनिक्ष्व ते नमः इति कुशोपरि अवनेजनं द
द्यात् ततस्तिलजलव्यंजनमधुघृतयुतान्नेन पिंडं निर्माय मधुघृताभ्यामभिघार्य मोदकादीनि चादाय॥ अद्यामुकगोत्र पतेऽमुकशर्म
न् सांवत्सरिकैकोद्दिष्टश्राद्ध एष ते पिंडो नमः इत्यवनेजनं कुशोपरि वामान्वारब्ध दक्षिणपाणिना पिंडं दद्यात् ततो द्विराचम्य हरिं स्मृत्वा ततः
उत्तराभिमुखीभूय श्वासं नियम्य पतिं ध्यायती दक्षिणामुखी भवेत् ततो दत्तावशिष्टजलयुतमवनेजनपात्रं मोदकादीनि चादाय॥ अद्यामु
कगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेऽत्र प्रत्यवनेनिक्ष्व ते नमः इति प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रस्याचम्य दक्षिणा ए०
मुखी वामेन पाणिना सूत्रमादाय दक्षिणेन पिंडोपरि धृत्वा॥ अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे एतत्ते वासो न ५८
मः इति मोदकादिना सूत्रमुत्सृजेत् ततः पिण्डे गंधादि दानं ततः शिवा आपः सन्त्विति जलं सौमनस्यमस्त्विति पुष्पम् अक्षतं चारिष्टम
स्त्विति तंडुलान्भोजनपात्रे प्रक्षिप्य मोदकादीन्यादाय॥ अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपाना

दिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् ततः पिंडोपरि अघोराः पितरः सन्तु इति पूर्वाग्रां जलधारां दद्यात् ततः प्राङ्मुखी कृताञ्जलिः गोत्रं नो
वर्द्धतामित्यादि पठित्वा एताः सत्या आशिषः सन्त्वित्याशिषः प्रार्थयेत् ततः पिंडोपरि दक्षिणामुखी सपवित्रकुशत्रयं दक्षिणाग्रमास्तीर्य्य तदुप
रि दक्षिणाग्रां जलधारां दद्यात् ततो नम्रीभूय पिंडमाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकं च वह्नौ निक्षिपेत् ततोऽर्घपात्रमुत्तानीकृत्य द
क्षिणादानं — अद्यामुकगोत्रस्य पत्युरमुकशर्म्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकापरिमितं रजतं चन्द्रदैवतं यथा
नामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ॥ इति दक्षिणां दद्यात् ततोऽभिरम्यतामिति विसर्जनम् ततः प्राङ्मुखी देवताभ्य इति
त्रिः पठेत् ततो दक्षिणामुखी हस्ताभ्यां दीपं निर्वाप्य ततो हस्तौ पादौ च प्रक्षाल्याचम्य प्रमादात्कुर्वतामित्यादि पठित्वा श्राद्धसंपूर्णकामत
यां विष्णुं स्मरेत् ततः श्राद्धीयवस्तु ब्राह्मणायार्प्पयेत् अंभसि वा क्षिपेत् ततः इष्टैः सह भोजनम् एवमेव शस्त्रहतादिनिमित्तकमाश्वि
न कृष्णचतुर्द्दश्यां तिथौ श्राद्धं कर्तव्यम् सांवत्सरिकपदं तत्र न दातव्यं तद्यथा अद्य आश्विनकृष्णचतुर्द्दश्यां तिथौ अमुकगोत्रस्य पत्यु
रमुकशर्म्मण एकोद्दिष्टश्राद्धमहं करिष्ये इति संकल्पः — अद्यामुकगोत्र पतेऽमुकशर्म्मन्नेकोद्दिष्टश्राद्धे इदमासनं ते नमः इत्येवमादि
ना आसनादिदानम् एवमेव वृद्धकर्त्तृकैकोद्दिष्टश्राद्धप्रयोगः ॥ अथ पात्रिकपार्वणश्राद्धप्रयोगः ॥ अपराह्णे स्नातः शुक्लद्विवासाः शु
चिराचम्य वस्त्रादिनावेष्टितं श्राद्धदेशमागच्छेत् ततः प्राङ्मुख उपविश्य सिद्धान्नसंभवे सिद्धमिति पात्रिकां दृष्ट्वा ॐ अपवित्र इत्यादि प
ठित्वा ॐ पुण्डरीकाक्षः पुनात्विति कुशत्रय यानीतजलैः श्राद्धवस्तूनि सिंचेत् रक्षार्थं दीपं निधाय गौरसर्षपैरवकीर्य्य ॐ नमो नमस्ते
गोविंद पुराणपुरुषोत्तम इदं श्राद्धं हृषीकेश रक्ष त्वं सर्वतो दिशः प्राच्यै नमः अवाच्यै नमः प्रतीच्यै नमः उदीच्यै नमः यवपुष्पैः भूम्यै नमः

इतिभूमिंत्रिःसंपूज्यपादयोरधःकुशत्रयंदत्वा ततःकुशत्रयतिलजलैःसंकल्पं कुर्य्यात् ॐअद्यामुकमासीयामुकपक्षीयामुकतिथावमुक
गोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणां अमुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाम
पात्रकपार्वणश्राद्धमहंकरिष्ये ततोगायत्रीत्रिर्जपित्वा ॐदेवताभ्यइत्यादित्रिर्जपेत् ततउत्तराभिमुखोदक्षिणोत्तरक्रमादासादितकुश
त्रयात्मकासनद्वयंप्रथमंदक्षिणमासनंसयवमुत्सृजेत् ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणांपार्वण
श्राद्धसंबन्धिनोविश्वेदेवाइदमासनंवोनमः इतिकुशत्रययवजलैरुत्सृजेत् एवं ॐअद्यामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमाता
महानाममुकामुकशर्मणांपार्वणश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनम इत्यपरमुत्सृजेत् ततोऽपसव्यं कृत्वापातितवामजानु
र्दक्षिणाभिमुखोद्विगुणभुग्नकुशत्रयतिलजलान्यादाय पूर्वपश्चिमासादितमोटकरूपाणिषडासनानितिलजलमोक्षितानिमत्स्ये
कंपित्रादिभ्यःपश्चिमतआरभ्यउत्सृजेत् तत्र क्रमः ॐअद्यामुकगोत्रस्यपितुरमुकशर्मणःपार्वणश्राद्धेइदमासनंतेस्वधा एवम्
पितामहप्रपितामहयोः ॐअद्यामुकगोत्रमातामहामुकशर्मणःपार्वणश्राद्धइदमासनंतेस्वधा एवमेवप्रमातामहवृद्धप्रमातामह
योर्दद्यात् ततःसव्यंकृत्वा ॐविश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐविश्वेदेवासऽआगतशृणुतामऽइमठं हवम् एदंबर्हिर्निषी | श्रा०
दतेत्यादिनादेवानावाह्य ॐपवित्रोसिपवपासम्म इति यवपाणीरितियवान्विकीर्य ॐविश्वेदेवाःशृणुतेत्यादिजपेत् ॐआगच्छन्तुम | ५८
हाभागाविश्वेदेवामहाबलाः येयत्रयोजिताःश्राद्धेसावधानाभवन्तुते इतिश्लोकंचपठेत् ततोऽपसव्यंकृत्वा दक्षिणाभिमुखः ॐपितृनह
मावाहयिष्य इत्युक्त्वा ॐउशन्तस्त्वानिधीमह्युशन्तःसमिधीमहिउशन्नुशतऽआवहपितृन्हविषेऽअत्तवेइत्यादिनापितृनावाह्य ॥

ॐअपहताऽअसुरारक्षाꣳसिवेदिषदः इत्यादिनापात्रेषुतिलान्विकीर्य्य ॐआयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः
अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवन्तुतेवन्त्वस्मान्नित्यादिपठेत् ततःसव्यंकृत्वा देवार्घपात्रद्वयेपवित्रेधृत्वा अपसव्येनपित्राद्यर्घपा
त्रेषुप्रत्येकंपवित्रंधृत्वासव्येनदेवार्घपात्रद्वये ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये शंय्योरभिस्रवन्तुनः इत्यादिनाजलंप्रक्षिप्य
अपसव्येनपित्राद्यर्घपात्रषट्केऽनेनैवमंत्रेणजलंपितृतीर्थे निक्षिपेत् ततःसव्यंकृत्वा ॐयवोसियवयास्मद्द्वेषोयवयारातीरिति
देवार्घपात्रद्वयेप्रत्येकंयवान्प्रक्षिप्य अपसव्येनपित्राद्यर्घपात्रेषुप्रत्येकम् ॐतिलोसिसोमदेवत्योगोसवोदेवनिर्मितःप्रत्नमद्भिः
पृक्तःस्वधयापितॄन्लोकान्प्रीणाहिनःस्वाहा इतितिलान्प्रक्षिपेत् ततःसव्येनदेवार्घपात्रद्वयेतूष्णीमेवगंधपुष्पेप्रक्षिप्य अपसव्ये
नपित्राद्यर्घपात्रेषुप्रक्षिपेत् ततःसव्यंकृत्वाएकंदेवार्घपात्रंवामहस्तेकृत्वा तत्रस्थितंपवित्रंदेवभोजनपात्रेपूर्वाग्रं धृत्वातदुपरिकिं
चिदुदकांतरंदत्वा ॐयादिव्याआपःपयसासंबभूवुर्याआन्तरिक्षाउतपार्थिवीर्याहिरण्यवर्णायज्ञियास्तानऽआपःशिवाःसꣳस्योना
सुहवाभवंतु इतिपठित्वायवकुशजलान्यादाय ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणांपार्वणश्राद्ध
संबंधिनोविश्वेदेवाएषतेहस्तार्घोनमः इत्यर्घंदद्युत्सृजेत् एवमेवमातामहादिदेवेभ्योपिदद्यात् ततोऽपसव्यंकृत्वापित्रर्घपात्रंवा
महस्तेकृत्वापितृभोजनपात्रेदक्षिणाग्रंपवित्रंधृत्वातदुपरिकिंचिदुदकांतरंदत्वा॥ ॐयादिव्याआपःपयसासंबभूवुर्याआंतरिक्षा
उतपार्थिवीर्याहिरण्यवर्णायज्ञियास्तानआपःशिवाःस—ꣳस्योनासुहवाभवंतु इतिपठित्वा मोटकतिलजलान्यादाय ॐअद्या
मुकगोत्रपितरमुकशर्मन्पार्वणश्राद्धएषतेहस्तार्घःस्वधेति अर्घंदद्युत्सृजेत् एवमेवपितामहादिपंचभ्योदद्यात् ततःसव्यंकृ

श्रा० त्वापवित्रसहितमवशिष्टजलयुतंदेवार्घपात्रद्वयंयथाक्रमंप्रत्येकंदेवासनदक्षिणपार्श्वे ॐविश्वेभ्योदेवेभ्यस्थानमसीत्युक्त्वाउत्ता
वि० नमेवधारयेत् अपसव्यंकृत्वाकिंचित् प्रपितामहार्घपात्रस्थितंपवित्रादीनिपितामहार्घपात्रेकृत्वातानिसर्वाणिपित्रर्घपात्रेकृ
६० त्वापित्रर्घपात्रंपितामहार्घपात्रोपरितदुभयंप्रपितामहार्घपात्रोपरिधृत्वापितृवामपार्श्वे ॐपितृभ्यःस्थानमसीतिमिलितान्येव
न्युब्जीकुर्यात् एवमेवमातामहाद्यर्घपात्राणिमेलयित्वा मातामहवामपार्श्वे॥ ॐमातामहप्रमातामहवृद्धप्रमातामहेभ्यःस्थानम
सीत्यर्घपात्राणिन्युब्जीकुर्यात् तथास्थापितानिचतानिदक्षिणादानपर्यंतंनोद्धरेत् नचालयेत् ततःसव्यंकृत्वा गंधादिदत्वायव
कुशजलैःसंकल्पंकुर्यात् ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्मणांपार्वणश्राद्धसंबंधिनोविश्वेदे
वाएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमइतियथासंभवमुत्सृजेत् एवमेव मातामहादि देवेभ्योपिदद्या
त् ततोऽपसव्यंकृत्वा गंधादिदत्वा मोटकतिलजलान्यादाय ॐअद्यामुकगोत्रपितरमुकशर्मन् पार्वणश्राद्धएतानिगंधपुष्पधूप
दीपतांबूलयज्ञोपवीतवासांसितेस्वधेतिपित्रेगंधादिदद्यात् एवमेवपितामहादिपंचभ्योपिदद्यात् ततोजलेनभोजनपात्रसहि
तमासनंवेष्टयित्वामंडलानिकुर्यात् ततःश्राद्धदेयान्नाग्रभागमानीयसघृतंतत्सव्येनैवप्राङ्मुखःपुटकादिस्थितजलेआहुतिद्व ग०
यंजुहुयात् ॐअग्नयेकव्यवाहनायस्वाहा ॐसोमायपितृमतेस्वाहा ततोजलघृतसहितंतिलव्यंजनयुतमन्नमपसव्येन ॐइ ६०
दमन्नमेतद्भूस्वामिपितृभ्योनमइतिदद्यात्ततोहुतशेषमन्नंकिंचित्किंचित्सव्येनदेवपात्रद्वये अपसव्येनपित्रादिपात्रेषुदत्वा
पिण्डार्थंकिंचिदवशेषयेत् ततउत्कृष्टमन्नंसिद्धमामंवापुरुषाहारक्षमंप्रत्येकंपरिविष्य यथासंभवमुपकरणंजलंघृतंचत

त्रोपनीयसव्येनदैवे अपसव्येनपित्र्यादिपात्रेषु मध्वन्नोपरि दत्वा प्रत्येकं ॐ मधुवाताऽऋतायतेमधुक्षरंतिसिन्धवः माध्वीर्न्नः सन्त्वोषधीः
ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपिता ॐ मधुमान्नोवनस्पतिर्म्मधुमाꣳ॥ऽअस्तुसूर्य्यः माध्वीर्गावोभवन्तुनः
ॐ मधुमधुमध्विति च जपेत् ततः सव्येन उत्तानपाणिभ्यां देवपात्रं स्पृष्ट्वा ॐ पृथिवीते पात्रं द्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृ
तं जुहोमि स्वाहा ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाꣳसुरे इति पठित्वा ॐ कृष्णहव्यमिदं रक्षमदियमिति पठित्वा
ॐ इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इदंहविरिति पुनरन्ने दक्षिणकरांगुष्ठमावेश्य ॐ यवोसियवयास्मद्
द्वेषोयवयारातीरिति यवानन्ने प्रक्षिप्य ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबंधिनो
विश्वेदेवा एतद्वोन्नं सोपकरणं नमः इति कुशत्रययवजलैरुत्सृजेत् एवमेव मातामहादिदेवेभ्योपि दद्यात् ततोऽपसव्यं कृत्वा दक्षिणामु
खः पातितवामजानुः पित्रपात्रं न्युब्जाभ्यां व्यस्ताभ्यां पाणिभ्यां स्पृष्ट्वा ॐ पृथिवीते पात्रं द्यौरपिधानं ब्राह्मणस्यमुखेऽअमृतेऽअमृतं जुहो
मि स्वाहा ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाꣳसुरे इति पठित्वा ॐ कृष्णकव्यमिदं रक्षमदियमिति पठित्वा ॐ
इदमन्नमित्यन्ने ॐ इमा आप इति जले ॐ इदमाज्यमिति घृते ॐ इदंकविरिति पुनरन्ने दक्षिणकरांगुष्ठमावेश्य ॐ अपहताऽअसु
रारक्षाꣳसिवेदिषद इत्यन्नोपरि तिलान्विकीर्य्य मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राय पित्रे अमुकशर्मणे पार्वणश्राद्ध एतत्तेन्नं
सोपकरणं स्वधेति पित्रेन्नमुत्सृजेत् एवमेव पितामहादिभ्योपि दद्यात् यद्येकं पात्रं भवति तदा पृथिवी पात्रमिति मंत्रः पुनर्न पठनीयः
ततः अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्तु इति जपेत् ततो गायत्रीं त्रिर्जपेत् ततः कुशेषूपविश्य ॐ मधुवाता

इतित्र्यचं जप्त्वा रक्षोघ्नीः ओं कृणुष्वपाजइत्याद्याश्चतस्रः पठित्वा भूमिं तिलैरवकिरेत् ओं उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः।
असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु इत्यादिपितृमंत्रान् ओं सहस्रशीर्षेत्यादिपुरुषसूक्तं जपेत् ओं आशुः शिशान इत्यादिक
मप्रतिरथं अन्यानि च पवित्राणि जपेत् पुराणेतिहासमंत्रादीनि च जपेत् ततउच्छिष्टसन्निधा वास्तृतकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रका
रमन्नमुद्धृत्य सतिलमेकीकृत्य ओं अग्निदग्धाश्च ये जीवा ये ऽप्यदग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति कुशोपर्यन्नमुत्सृ
जेत् ततः सव्यं कृत्वा चम्य हरिं स्मृत्वा गायत्रीं मधुवाता इति त्र्यचं मधु मधु मध्विति च जपेत् ततोऽपसव्यं कृत्वा पिण्डपातनार्थं निर्मितहस्त
मात्रं चतुरंगुलोच्छ्रितं दक्षिणप्लवपिण्डिकाद्वयमध्यस्थाने सव्यहस्तधृतोत्तरभागेन दक्षिणहस्तधृतमूलेन पवित्रेण ओं अपहता ऽअसुरा
रक्षांसि वेदिषद इति मंत्रेण प्रादेशमात्रमुल्लिखेत् पवित्रमैशान्यां दिशि क्षिपेत् ततः उभयत्र ओं ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः
स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मादिति मंत्रेण ज्वलदंगारं प्रत्येकं भ्रामयेत् अंगारं दक्षिणतो निदध्यात्॥
ततः उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयं रेखायामास्तृणुयात् ततः सव्यं कृत्वा ओं देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पुटकषट्के
जलतिलगंधपुष्पाणि कृत्वा एकं पात्रं वामहस्ते कृत्वा मोटकतिलजलान्यादाय ओं अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धपिण्डस्था
नेऽत्रावनेनिक्ष्व ते स्वधा इत्यास्तृतदर्भमूलेऽवनेजनं दद्यात् एवं पितामहायापरपात्रमादाय कुशमध्ये तृतीयं पात्रमादाय प्रपितामहा
य कुशाग्रे दद्यात् एवमेवपरपिण्डिकायामपि यथाक्रमं कुशेष्ववनेजनादि दद्यात् ततः सव्यं जनतिलजलमध्वाज्यहुतशेषान्नेन षट्
पिण्डान्निर्माय मधुं च ताभ्यामभिघार्य दद्यात् प्रथमं मोटकतिलजलपिण्डमादाय ओं अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धएष

त्तेपिण्डः स्वधा इति प्रथमावनेजनस्थाने पिण्डं दद्यात् एवं पितामहप्रपितामहयोः प्रत्येकं तत्तदवनेजनस्थाने पिण्डं दद्यात् एवमेव परपि
ण्डानपि द्वितीयपिण्डिकायां तत्तदवनेजनस्थाने मातामहादिभ्यो दद्यात् पिण्डदानं च सव्योपगृहीतदक्षिणहस्तेन कार्यम् ततः प्रपि
तामहादूर्ध्वं त्रयाणां लेपभागभुजां तृप्तिमुद्दिश्य ॐ लेपभागभुजस्तृप्यन्तु इति पठित्वा पित्रादिकपिण्डाधारकुशमूले करं प्रोञ्छ्य सव्यं कृ
त्वा त्रिराचामेत् ततो हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणामुखः ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति पठित्वा वामावर्तेनो
दङ्मुखीभूय प्रीतमनाः श्वासं नीत्वा तेनैव यथापरावर्तमानाः पितॄन्भास्वरमूर्तीन्ध्यायन् अमीमदन्त पितरो यथाभागमावृषायिष
त इति जपेत् ततः पूर्वदत्तावशिष्टजलयुतमवनेजनपात्रमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे पिण्डेऽत्र मत्स्व
ने निक्ष्व ते स्वधेति प्रथमपिण्डोपरि प्रत्यवनेजनं दद्यात् एवमेव तत्तदवनेजनपात्रैः पितामहादिभ्यस्तत्तत्पिण्डोपरि प्रत्यवनेजनं द
द्यात् ततो नीवीं विस्रस्य सव्येनाचम्य अपसव्यं कृत्वा वामेन पाणिना नीय दक्षिणकरे सूत्रं कृत्वा ॐ नमो वः पितरो रसाय नमो वः पि
तरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः
पितरो दत्त सतो वः पितरो देष्म इति पठित्वा एतद्वः पितरो वास इत्युक्त्वा षट्सु पिण्डेषु सूत्राणि धृत्वा मोटकतिलजलान्यादाय ॐ अद्या
मुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे पिण्डे एतत्ते वासः स्वधेति सूत्रमुत्सृजेत् एवमपरपिण्डपंचकेषु तत्तन्नाम्नोत्सृजेत् ततो गं
धपुष्पधूपदीपताम्बूलानि प्रत्येकं पिण्डेषु दद्यात् ततः ॐ शिवा आपः सन्त्विति जलं सौमनस्यमस्त्विति पुष्पं ॐ अक्षतं चारिष्टमस्त्व
िति तंडुलानन्नपात्रेषु क्षिपेत् ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः पार्वणश्राद्धे दत्तैतदन्नपानाद

श्रा० दिकमस्त्वमस्ति त्युत्सृजेत् एवमेव पितामहादीनामक्षय्यं तनान्नां प्रत्येकमुत्सृजेत् ततः सव्यं कृत्वा दक्षिणां दिशं पश्यन् सुमनाः पि
वि० तरः ते पर ओं अघोराः पितरः सन्त्विति पठन् पूर्वाग्रं जलधारां दद्यात् ततः कृताञ्जलिः प्राङ्मुख आशिषः प्रार्थयेत् गोत्रं नो वर्द्धतां दातारो नो
६२ भिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमद् बहुदेयं च नोऽस्तु अन्नं च नो बहु भवेद् अतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचि
ष्म कंचन एताः सत्या आशिषः सन्तु ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य ओं ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परि
स्रुतं स्वधा स्थ तर्पयत मे पितॄन् इति मन्त्रेण सपवित्रकुशोपरि दक्षिणाग्रं जलधारां दद्यात् ततः स्वस्थाने स्थितानेव पिण्डान्नम्रीभूया
घ्रायोत्थापयेत् ततः पिण्डाधारकुशानुल्मुकद्वयं च वह्नौ क्षिपेत् ततः सव्येन देवार्घपात्रद्वयं संचाल्यापसव्येन पित्राद्यर्घपात्राण्युत्ता
नीकृत्य सव्येन कुशत्रययवजलैर्दैवदक्षिणां दद्यात् ओं अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्रा
द्धसंबंधिनां विश्वेषां देवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे एवं
मातामहादिश्राद्धसंबंधिविश्वेदेवब्राह्मणाय दक्षिणां दद्यात् ततोऽपसव्येन मोटकतिलजलान्यादाय पित्रादिश्राद्धदक्षिणां दद्यात्
ओं अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुम ग
हमुत्सृजे एवं पितामहादिश्राद्धेष्वपि दक्षिणां दद्यात् हिरण्यरजतासंपत्तौ यथासंभवमन्यदपि फलमूलादिकं दक्षिणां दद्यात् ॥ ६२
ओं वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति पित्रादीन् वि
सर्जयेत् ओं विश्वेदेवाः प्रीयन्तामिति देवविसर्जनम् ततः सव्येन देवताभ्यः पितृभ्यश्चेति त्रिर्जपेत् ततोऽपसव्येन रक्षादीपं निर्वाप्य ॥

सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा क
र्म पूर्णतार्थं विष्णुं स्मरेत् श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् तदभावे जले वा क्षिपेत् ततो वैश्वदेव बलिकर्मणी कुर्यात् तदुक्तं स्वा
हान्तास्ताञ्जले वाग्नौ कुर्यात्पंचाहुतिं क्रमात् ब्रह्मा प्रजापतिर्गृह्याः कश्यपोनुमतिस्तथा १॥ चतुर्थ्यन्तैर्जलं क्षिप्त्वा वैश्वदेव बलिं च
रेत् पर्जन्य आपः पृथिवी धाता पीचविपूर्वगः २ चतुर्वायुः प्राच्यवाचो प्रतीची चाप्युदीच्यपि ब्रह्मान्तरिक्षसूर्याश्च विश्वे देवास्त
तःपरं ३ विश्वभूतास्तथा चापि भूतानां च पतिस्तथा अपसव्येन सतिलं पितृभ्यश्च स्वधा नमः ४ सनकादिसप्तमर्त्येभ्यो हंतकं तो
पवीतवान् पश्चैमतलेच सव्येन जलं निर्णेजनं नमः ५ दद्यात्काकांश्च चांडालाः पतिताः पापसंगिनः ततः कीटपतंगाश्च गावः श्वानो ततः परं
६ चतुर्थ्यन्तानुपादाय नमोन्तान् क्रमतः पठेत् देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः प्रेताः पिशाचास्तरवः समस्ता ये चा
न्नमिच्छन्ति मया प्रदत्तं १ कीटाः पतंगास्तरवश्च वृक्षा जलेस्थले ये विवरांसि जीवाः ते तृप्तिमायांतु मया प्रदत्तं तेभ्यो विसृष्टं भुवि चान्नमेतत्
२ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मनिबंधबद्धाः प्रयांतु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिता भवंतु ३ येषां न माता न
पिता न बंधुर्नैवान्नसिद्धिर्न तथान्नमस्ति तत्तृप्तयेन्नं भुवि दत्तमेतत्ते चान्नतृप्ता मुदिता भवंतु ४ शंभवः सौरभेयाः इति गोभ्यस्ततः श्वान
वितिश्वभ्यः इंद्रेतिवायसानां च शनकैर्निक्षिपेद्भुवि ततः ब्राह्मणान् भोजयेत् इति नैमित्तिक श्राद्ध बलिदानमिति यस्य स्मृत्या च नामो
क्त्या तपोयज्ञक्रियादिषु न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥ इति पार्वण श्राद्धविधिः ॥ एषविधिरुपरागनवान्नभक्षणती
र्थप्राप्तिनिमित्तकादि श्राद्धेषु बोद्धव्यः तीर्थप्राप्तिनिमित्तकादि श्राद्धेष्वावाहनार्घ्याभाव इति विशेषः अथाभ्युदयिक श्राद्धम् तत्र म

प्रा० अथ मंतन्नियतपूर्वेद्युः सोमात् पूजाविधिः प्रातःकाले स्नातः कृतनित्यक्रियः कुड्ये फलके वा स्थापितरक्षिकासप्तदशसु गणपतिसहितषो
२० डशमातॄः मूर्तिकामयीः श्रियं तदभावे ताम्रपिरक्षिकायां पूजयेत् तत्र मातरश्च गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना स्व
३ धा स्वाहा मातरो लोकमातरः हृष्टिः पुष्टिस्तथा तुष्टिरात्मकुलदेवतेति तत्क्रमः आचम्य प्राङ्मुख उपविश्य प्रथमरक्षिकामारभ्य
क्रमेण गणपतिरसि गौर्य्यसि पद्मासि शच्यसि मेधासि सावित्र्यसि विजयासि जयासि देवसेनासि स्वधासि स्वाहासि मातरः स्थ
लोकमातरः स्थ हृष्टिरसि पुष्टिरसि तुष्टिरसि आत्मकुलदेवतासि श्रीरसीत्युक्त्वा ततोऽक्षतानादाय पुनः प्रथमरक्षिकामारभ्य ओंभू
र्भुवः स्वर्गणपते इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वर्गौरि इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः श
चि इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वर्मेधे इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः सावित्रि इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वर्विजये इहागच्छ
इह तिष्ठ ओंभूर्भुवः स्वर्देवसेने इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः स्वधे इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ ओंभूर्भु
वः स्वर्मातर इहागच्छत इह तिष्ठत ओंभूर्भुवः स्वर्लोकमातर इहागच्छत इह तिष्ठत ओंभूर्भुवः स्वः हृष्टे इहागच्छ इह तिष्ठ ओंभूर्भुवः
स्वः पुष्टे इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वस्तुष्टे इहागच्छ इह तिष्ठ ओंभूर्भुवः स्वः आत्मकुलदेवते इहागच्छ इह तिष्ठ ओंभूर्भुवः श्रीः इ ग०
हागच्छ इह तिष्ठ गणपतिसहितास्ता मातॄः श्रियं च प्रत्येकमोंकारव्याहृतिपूर्वकमावाह्य स्थापयित्वा ओं मनो जूतिर्जुषतामाज्यस्य ६३
बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु विश्वेदेवास इह मादयन्तामों प्रतिष्ठ इत्यक्षतान्विकीर्य्य एकदेवप्रतिष्ठां कु
र्यात् ततः पाद्याद्यर्घ्यं गृहीत्वा प्रथमत आरभ्य एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं गणपतये नमः इदमनुलेपनम्॥

ॐगण पतयेनमः इमानिपुष्पाणि ॐगणपतयेनमः इतित्रिःपूजयेत् एतानिगंधपुष्पधूपदीपतांबूलनैवेद्यानि ॐगणपतयेनमः एव
मेव ॐगौर्यैनमः ॐपद्मायैनमः ॐशच्यैनमः ॐमेधायैनमः ॐसावित्र्यैनमः ॐविजयायैनमः ॐजयायैनमः ॐदेवसेनायैनमः ॐस्व
धायैनमः ॐस्वाहायैनमः ॐमा[illegible]नमः ॐलोकमातृभ्योनमः ॐहृष्ट्यैनमः ॐपुष्ट्यैनमः ॐतुष्ट्यैनमः ॐआत्मकुलदेवतायैनमः
ॐश्रियैनमः इतिपाद्यादिभिः प्रत्येकमर्चयेत् ततोगणपतिश्रीसहिताः षोडशमातरः स्वमध्वमितिविसर्जनम् ॐश्रीर्मयिरमस्व
तिततोघृतेनभित्तौपंचसप्तवारेखाउत्तरोत्तरक्रमेणकुर्यात् तासुपलेनप्रतिच्छेदनेनमंत्रेणॐवसोःपवित्रमसिशतधारंवसोःप
वित्रमसिसहस्रधारम् देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः इत्यनेनभित्तौत्रिःपंचसप्तवाघृतधारां
दद्यात् ॥ अथाभ्युदयिकश्राद्धप्रयोगः ॥ तत्रदक्षिणोत्तरक्रमेणद्वादशस्थानेषुप्रत्येकमासादितद्रव्यंज्वलितप्रदीपदेशमागत्याच
म्यप्राङ्मुखउदङ्मुखोवोपविशेत् सव्येनसर्वकर्मकर्तव्यं ऋजवःकुशाः तिलकार्येयवाःकर्तव्याः ततः ॐअपवित्रःपवित्रोवास
र्वावस्थांगतोपिवा यःस्मरेत्पुण्डरीकाक्षं सबाह्याभ्यंतरःशुचिः ॐपुण्डरीकाक्षःपुनात्विति श्राद्धीयद्रव्याणिसिंचेत् कुशोदकेन
ततःकुश[illegible]न्नादाय ॐअद्येत्यमुक[illegible]गोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनांतथामुकगोत्रा
णांपितृपितामहप्रपितामहानाममुकामुकशर्मणांनांदीमुखानांतथामुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममु
कामुकशर्मणांनांदीमुखानांअमुकगोत्रस्यामुकस्यकर्तव्यामुककर्मनिमित्तकमाभ्युदयिकश्राद्धमहंकरिष्ये इतिसंकल्पयेत्
ततोगायत्रीं त्रिर्जपित्वा ॐदेवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच नमःस्वाहायैस्वधायैनित्यमेवनमोनमः इतित्रिर्जपेत् ॥

श्रा० प्र० ६४ ...त्मतः ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वे देवा इ
दमासनमिमे वो नमः इति कुशत्रयरूपं सपवित्रसयवमासनं दक्षिणत आरभ्योत्सृजेत् एवं यथोत्तरं ॐ अद्यामुकगोत्राणां पितृपितामहप्र
पितामहानाममुकामुकशर्मणां नांदीमुखानां आभ्युदयिकश्राद्धसंबंधिनो विश्वे देवा इदमासनं वो नमः ॐ अद्यामुकगोत्राणां मा
तामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां नांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनो विश्वे देवा इदमासनं वो नमः ॥
ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखे आभ्युदयिकश्राद्ध इदमासनं ते नमः एवं पितामहीप्रपितामहीभ्यामासनं दद्यात् ॐ
अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध इदमासनं ते नमः एवं पितामहप्रपितामहयोरपि ॐ अद्यामुकगोत्र माता
महामुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध इदमासनं ते नमः एवं प्रमातामहवृद्धप्रमातामहयोरपि तत आवाहनम् ॐ विश्वान् दे
वानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वे देवास आगत शृणुता म इमं हवम् एदं बर्हिर्निषीदत इत्यावाह्य ॐ यवोसि यवयास्मद्द्वे
षो यवयारातीः इति देवपात्रे यवान् विकीर्य ॐ विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यज
त्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॐ आगच्छंतु महाभागा विश्वे देवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इ प० 
ति पठेत् ॐ नांदीमुखान् पितॄन् अहमावाहयिष्ये इत्युक्त्वा ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हवि ६४
षे अत्तवे इति पितृपात्रे आवाह्य ॐ अपहता असुरा रक्षांसि वेदिषद इति मात्रादिपात्रे यवान् विकीर्य ॐ आयन्तु नः पितरः सोम्या
अग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानिति पठित्वा ततोऽर्घकरणम् तत्र देवपूर्वकं

सर्वेष्वर्घपात्रेषु पवित्राणि कृत्वा ओं शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंय्योरभिस्रवन्तु न इति जलं क्षिपेत् ततो देवार्घपात्रेषु ओं यवो
सि यवयास्मद्द्वेषो यवयारातीरिति यवान् क्षिपेत् मात्रादिपात्रेषु ओं यवोसि सोमदेवत्यो गोसवो देवनिर्मितः प्र त्नमद्भिः एक्तः पुष्ट्या नान्दी
मुखाल्लोकान् प्रीणाहि नः स्वाहेति मन्त्रेण यवान् क्षिपेत् ततः प्रत्येकं गंधपुष्पे तूष्णीं क्षिपेत् ततः प्रथमदेवपात्रं वामहस्ते कृत्वा तत्र
स्थं पवित्रं भोजनपात्रे निधाय तदुपरि किञ्चिदुदकान्तरं दत्वा ओं या दिव्या आपः पयसा संबभूवुर्या आंतरिक्षा उत पार्थिवीर्या हिरण्य
वर्णा यज्ञियास्तान आपः शिवाः सं स्योनाः सुहवा भवन्त्विति पठित्वा कुशत्रय यवजलान्यादाय ओं अद्यामुकगोत्राणां मातृपिताम
ही प्रपितामहीनाममुकामुकदेवीनां नान्दीमुखीनां आभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एष वो हस्तार्घो नमः एवमेव पित्रादिश्राद्धदे
वेभ्यो मातामहादिदेवेभ्यश्च हस्तार्घं दद्यात् ततो मातुरर्घपात्रमादाय पूर्ववत्कृत्वा ओं या दिव्या इत्यादि पठित्वा कुशादीन्यादाय ओं अद्या
मुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः एवं पितामहीप्रपितामह्योरपि दद्यात् ततः पित्राद्यर्घपा
त्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्यादाय ओं अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः एवमेव।
पितामहादिभ्यो हस्तार्घं दद्यात् ततो [illegible] शिष्टजलपवित्रयुतं प्रथमं देवार्घपात्रमादाय ओं विश्वेभ्यो देवेभ्यः स्थानमसीति देवासन
दक्षिणभागे उत्तानं स्थापयेत् एवमपरं देवार्घपात्रद्वयं तदासनदक्षिणभागे उत्तानं स्थापयेत् ततः पितामहीप्रपितामहीपात्रद्वय
स्थितं पवित्रादि मात्रर्घपात्रे निधाय मात्रर्घपात्रं पितामह्यर्घपात्रोपरि तत्पात्रं प्रपितामह्यर्घपात्रोपरि धृत्वा दक्षिणकरेणादाय ओं मा
तृभ्यः स्थानमसि मात्रासनवामभागे न्युब्जीकुर्यात् एवमेव पित्राद्यर्घपात्राणां मेलनं कृत्वा पित्रासनवामभागे ओं पितृभ्यः स्थानमसीति

श्रा० अर्घपात्राणि उत्तानीकुर्यात् एवमेव मातामहाद्यर्घपात्राणां मेलनं कृत्वा मातामहासनवामभागे ओं मातामह प्रमातामह वृद्धप्रमातामहे
वि० भ्यः स्थानमसीति न्युब्जीकुर्यात् ततो गंधादिदानं तत्र क्रमः ओं अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नां
६५ दीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि वो नमः एवं पित्रादिदेवेभ्यो मा
तामहादिदेवेभ्यश्च दद्यात् ततः ओं अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्ध एतानि गंधपुष्पधूपदीपतांबूलसिंदूरवा
सांसि ते नमः एवं पितामहीप्रपितामहीभ्यामपि गंधादिदानम् ततः ओं अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धे एता
नि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते नमः एवं पितामहादिपंचभ्योपि गंधादिदानम् ततो जलेन सर्वासनानि भोजनपात्र
सहितानि चतुष्कोणमंडलेन वेष्टयेत् ततः सजलेपुटकादौ हस्तेनैवेद्य घृतमन्नं ओं अग्नये कव्यवाहनाय स्वाहा ओं सोमाय पितृमते
स्वाहा इत्याहुतिद्वयं जुहुयात् ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवामजानुर्मोटकतिलजलान्यादाय ओं इदमन्नमेतद्भूस्वामि
पितृभ्यो नमः इति भूस्वामिने किंचिदन्नं दद्यात् ततः सव्यं कृत्वा प्राङ्मुख उदङ्मुखो वा हुतशेषमन्नं देवपूर्वकं पात्रेषु किंचिद्दत्वा पिंडा
र्थं च किंचिदवशेषयेत् ततोऽन्यदन्नं यथासंभवं सर्वत्र परिविष्य घृतं जलं च तत्रोपनीय पात्रमालभेत् तत्र क्रमः उत्तानपाणिभ्यामथ श्रा०
मं देवपात्रं स्पृष्ट्वा ओं पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा इति पठित्वा ओं इदं विष्णुर्विचक्रमे त्रेधा ६५
निदधे पदम् समूढमस्य पांसुरे ओं कृष्ण हव्यमिदं रक्ष मदीयमिति पठित्वा ओं इदमन्नमित्यन्ने ओं इमा आप इति जले ओं इदमाज्यमि
ति घृते ओं इदं हविरिति पुनरन्ने इति दक्षिणांगुष्ठमारोप्य ओं यवोसि यव यास्मद्द्वेषो यव यारातीरिति यवान् विकीर्य कुशादीन्यादाय ॥ ओं

अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमन्नं सोपक
रणं वो नमः यद्येकमेव पात्रं भवति तदा वामेन पाणिना पात्रमस्पृशन्नेव ओं इदं विष्णुरित्यादि पठित्वा यवप्रक्षेपं कृत्वा कुशादीन्यादाय पित्रा
द्युल्लेखेन पित्रादिदेवेभ्योप्यन्नमुत्सृजेत् एवमेव मातामहादिदेवेभ्यः भिन्नभिन्नपात्रपक्षे ओं पृथिवी ते पात्रमित्यादीनां सर्वेषामावृत्तिः
ततो मातृपात्रमुत्तानाभ्यामेव कराभ्यां स्पृष्ट्वा ओं पृथिवी ते पात्रमित्यादि इदं विष्णुरिति पठित्वा ओं कृष्णाकव्यमिदं रक्षस्व मदीयं ओं इदमन्न
मित्यन्ने ओं इमा आप इति जले ओं इदमाज्यमिति घृते ओं इदं हविरिति पुनरन्ने दक्षिणकरांगुष्ठमारोप्य ओं अपहता असुरा रक्षांसि
वेदिषद इत्यन्नोपरि यवान् विकीर्य ओं अद्यामुकगोत्रे मातरमुकदेवि नांदीमुख्याभ्युदयिकश्राद्ध इदमन्नं सोपकरणं ते नमः ए
वं पात्रालंभनादिकं कृत्वा प्रत्येकं पितामहीप्रपितामहीभ्यामपि दद्यात् एवं पितृपात्रमालभ्य ओं पृथिवी ते पात्रमित्यादि पठित्वा पूर्व
वत्सर्वं कृत्वा ओं अद्यामुकगोत्र पितरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्ध इदमन्नं सोपकरणं ते नमः इति पित्रेन्नमुत्सृजेत् एवं पि
तामहादिभ्यः पंचभ्योपि प्रत्येकमन्नमुत्सृजेत् ततः प्रांजलिः ओं अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्त्विति ज
पेत् दर्भेषूपविश्य गायत्रीं त्रिर्जपित्वा [illegible] मधु मधु मध्विति जपेत् मधुवाता इत्यादि त्र्यचं जपेत् पितृमंत्रान् ओं [illegible] रताम वर इत्यादीन्
जपेत् अन्यानि च पुरुषसूक्तादीनि पवित्राणि जपेत् ततः प्रागग्रकुशत्रयं भूमावास्तीर्य जलेन प्रोक्ष्य जलप्रोक्षितं सयवघृतमन्नं कु
शोपरि ओं अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिमिति मंत्रेण कुशोपरि अन्नं विकिरेत् ॥
तत आचम्य हरिं स्मृत्वा गायत्रीं त्रिर्जपेत् चतुरस्रां पिंडयोग्यां भूमिं परिष्कृत्य उत्तरोत्तरक्रमेण स्थानत्रये प्रादेशमात्रं परिमाय ततः

प्रागग्रां रेखां दर्भपिंजुलीमूलेन ॐ अपहता असुरा रक्षांसि वेदिषद इति रेखात्रयं कुर्यात् ततः प्रत्येकं रेखात्रयोपरि ॐ ये रूपाणि प्र
तिमुंचमाना असुराः सन्तः स्वधया चरंति परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकान् प्रणुदात्यस्मादिति मंत्रेण अंगारान् भ्रामयेत् तदु
परि प्रत्येकं कुशत्रयमास्तीर्य ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नम इति त्रिर्जपित्वा
प्रत्येकमवनेजनं दद्यात् तत्क्रमः [illegible] जलगंधपुष्पैर्नव पात्राणि पूरयित्वा पात्रमेकं वामकरे कृत्वा कुशाग्राण्यादाय ॐ अद्यामु
कगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्धपिण्डस्थानेऽवनेनिक्ष्व ते नमः इति सर्वदक्षिणकुशत्रयमूले मात्रेऽवनेजनं
दद्यात् किंचिज्जलमवशेषयेत् एवमेव पात्रांतरमादाय तत्कुशमध्ये पितामह्यै अवनेजनं दद्यात् तत्कुशत्रयाग्रे प्रपितामा
ह्यै अवनेजनं दद्यात् ततश्चापरपात्रमादाय कुशांश्चादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धपि
ण्डस्थानेऽवनेनिक्ष्व ते नमः इति मध्यस्थितकुशत्रयमूले पित्रेऽवनेजनं दद्यात् किंचिज्जलमवशेषयेत् एवं तत्कुशत्रयमध्या
ग्रयोः पितामहप्रपितामहयोरवनेजनं दद्यात् ततस्सप्तमपात्रमादाय कुशांश्चादाय ॐ अद्यामुकगोत्र मातामहामुकशर्मन् नांदी
मुखाभ्युदयिकश्राद्धपिण्डस्थानेऽवनेनिक्ष्व ते नम इत्यपरकुशत्रयमूले मातामहायावनेजनं दद्यात् एवं प्रमातामहवृद्धप्रमा
तामहयोरपि ततो यवदधिबदरघृतमिश्रान्नेन नव पिण्डान् निर्माय एकं पिंडं कुशांश्चादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नां
दीमुखि आभ्युदयिकश्राद्धे एष पिण्डस्ते नम इति तदवनेजनस्थाने पिण्डं दद्यात् एवमेव पितामहीप्रपितामहीभ्यां स्वीयस्वीया
वनेजनस्थाने पिण्डं दद्यात् ततश्चतुर्थपिण्डमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धे एष ते पिण्डो नमः

एवं पितामहप्रपितामहयोः ततः प्रथमपिण्डमादाय ॐ अद्यामुकगोत्रमातामहामुकशर्म्मन्नांदीमुखाभ्युदयिकश्राद्ध एष ते पिंडो नमः
इत्यवनेजनस्थाने पित्रे पिण्डं दद्यात् एवमेव पितामहादिपंचभ्यस्तत्तदवनेजनस्थानेषु प्रत्येकं पंच पिण्डान्दद्यात् ततो दर्भमूलेक
रं प्रोक्ष्याचम्य हरिं स्मृत्वा ॐ अत्र मातरो मादयध्वं यथाभागमावृषायध्वमिति पठित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव य
थासुखं परावर्तयन् ॐ अमीमदंत मातरो यथाभागमावृषायिषतेति जपेत् एवमत्र पितरो मादयध्वं यथाभागमावृषायध्व
मिति जप्त्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव यथासुखं परावर्तयन् अमीमदंतेत्यादि जपेत् एवमेव मातामहादिपक्षे मंत्रज
पः ततोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात् तत्र क्रमः ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुख्याभ्युदयिकश्राद्ध
पिण्डे प्रत्यवनेनिक्ष्व ते नम इति तत्पिण्डोपरि दद्यात् एवं पितामहीप्रपितामह्योस्तथा ॐ अद्यामुकगोत्र पितरमुकशर्मन्नांदीमुखा
भ्युदयिकश्राद्धपिण्डेऽत्र प्रत्यवनेनिक्ष्व ते नम इति पिण्डोपरि प्रत्यवनेजनं दद्यात् एवमेव तत्तत्पिण्डोपरि पितामहादिपंचभ्यो दद्यात्॥
ततो नीवीं विस्रंस्याचम्य हरिं स्मृत्वा सूत्राण्यादाय ॐ नमो वो मातरो रसाय नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्व
धायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो मातरो नमो वो गृहान्नो मातरो दत्त सतो वो मातरो देष्म एतद्वो मातरो वा
स इति मातृणां पिण्डत्रयोपरि सूत्रं दद्यात् ततः ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधा
यै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म एतद्वः पितरो वास इ
त्यनेन पित्रादिपिण्डषट्कोपरि प्रत्येकं सूत्रं दद्यात् ततः कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युद

यिकश्राद्धे प्रियेद्गुर एतत्तेवासो नम इति स्वत्रमुत्सृजेत् एवमेव पितामहाप्रपितामहाभ्याम् ॐअद्यामुकगोत्र पितरमुकशर्मन्नान्दीमुखाभ्युद
यिकश्राद्धे पित्रे एतत्तेवासो नमः एवं पितामहादिपंचभ्यः सूत्रं दद्यात् ततो गंधपुष्पधूपदीपतांबूलादिभिः प्रत्येकं पिण्डानभ्यर्च्य ॐशिवा
आपः संत्विति जलं ॐसौमनस्यमस्त्विति पुष्पं ॐअक्षतं चारिष्टमस्त्विति तंडुलान् प्रत्येकं पात्रेषु निक्षिप्य कुशादीन्यादाय ॐअद्या
मुकगोत्राया मातुरमुकदेव्या नांदीमुख्या आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयतामित्यक्षय्योदकमुत्सृजेत् एवं पितामह्याः
प्रपितामह्याश्चाक्षय्योदकं दद्यात् तथाऽद्यामुकगोत्रस्य पितुरमुकशर्मणो नांदीमुखस्याभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीय
तामिति पित्रे एवं पितामहादिपंचभ्योऽक्षय्योदकं दद्यात् ततः ॐअघोरा मातरः संत्विति मातृपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्या
त् ॐअघोराः पितरः संत्विति पित्रादिपिण्डषट्कोपरि जलधारां दद्यात् ततः ॐगोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव च श्रद्धा
च नो मा व्यगमद्बहु देयं च नोऽस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः
संतु इत्याशीः प्रार्थयेत् ततः सपवित्रकुशत्रयपाणिः प्रत्येकं मात्रादिपिण्डत्रये पित्रादिपिण्डत्रये मातामहादिपिंडत्रये च धृत्वा ॐऊर्ज्जं
वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्प्पयत मे मातॄरिति मात्रादिपिण्डोपरि दक्षिणाग्रां जलधारां दद्यात् ततस्तथैव॥ १०
ॐऊर्ज्जं वहन्तीरित्यादि पठित्वा पित्रादिपिण्डषट्कोपरि जलधारां दद्यात् ततः पिण्डानाघ्राय उत्थाप्य पिण्डाधारकुशानुल्मुकं च वह्नौ क्षि ६७
पेत् अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् दक्षिणाद्रव्यं च फलमुले फलमूलं वा प्रत्येकं तत्रक्रमः ॐअद्यामुकगोत्राणां मातृपिता
महीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनां विश्वेषां देवानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थं

मिमे फलमूले वनस्पतिदैवते यथानाम गोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे एवं पित्रादि श्राद्धसंबंधि विश्वेदेव श्राद्ध दक्षिणां मा
तामहादि श्राद्धसंबंधि विश्वेदेव श्राद्ध दक्षिणां च दद्यात् ॐ अद्यामुकगोत्रा या मातुरमुकदेव्या नांदीमुख्याः कृतैतदाभ्युदयिक श्रा
द्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते इत्यादि एवं पितामही प्रपितामह्योरपि ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणो नांदीमु
खस्य कृतैतदाभ्युदयिक श्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते इत्यादि एवं पितामहादि श्राद्ध दक्षिणां दद्यात् ततः ॐ वाजे वाज इत्या
दिना मात्रादि विसर्जनम् ॐ विश्वेदेवाः प्रीयंतामिति देव विसर्जनम् ततो देवताभ्य इति त्रिर्जपः दीपनिर्वापणं आचमनं प्रमादात्पाठः॥
श्राद्धीय वस्तु मतिपत्तिः इत्याभ्युदयिक श्राद्ध पद्धतिः॥ अथ नित्यश्राद्ध प्रयोगः॥ आचम्य उदङ्मुख उपविष्टः ॐ अपवित्रः पवित्रो वा स
र्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिरिति पठित्वा॥ ॐ पुंडरीकाक्षः पुनात्विति कुशत्रय जलेन श्राद्धीय द्रव्याणि
सिंचेत् ततः कुशत्रय तिलजलान्यादाय ॐ अद्यामुकगोत्राणां पितृ पितामह प्रपितामहानाममुकामुक शर्मणां मातामह प्रमातामह वृद्ध
प्रमातामहानाममुकामुक शर्मणां नित्यश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ततस्त्रिर्गायत्रीं जप्त्वा ॐ देवताभ्यः पितृभ्यश्च महायो
गिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पातितवामजानुर्मोटक तिलजलान्यादा
य ॐ अद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्धे इदमासनं ते स्वधेति तिलजलमोक्षितं मोटकरूपमासनं दक्षिणाग्रं पित्रे दद्या
त् एवमेव पितामहादि पंचभ्यः प्रत्येकमासनमुत्सृजेत् ॐ अपहता असुरा रक्षाꣳसि वेदिषद इति श्राद्धदेशे तिलान् विकी
र्य ॐ आयंतु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे स्वधया मदंतोऽधिब्रुवंतु तेऽवंत्वस्मानिति जपेत् ॥

ततः ॐ अद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्ध एतानि गंधपुष्पधूपदीपतांबूलानि ते स्वधा इति यथासंभवं पित्रे गंधादि दद्यात्॥
एवमेव पितामहादिभ्य उत्सृजेत् ततो जलेन मंडलं चतुष्कोणमन्नपात्रस्य चतुर्दिशं कृत्वाऽन्नपरिवेषणं कुर्यात् ततो मधु दत्वा
ॐ मधु वाताऽऋतायते मधु क्षरंति सिन्धवः माध्वीर्नः सन्त्वोषधीः ॐ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः मधु द्यौरस्तु नः पि
ता मधुमान्नो वनस्पतिर्मधुमाँ २ऽअस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः ॐ मधु मधु मध्वित्यभिमंत्रयेत ततोऽन्नपात्रं व्यस्ताभ्याम
धोमुखाभ्यां पाणिभ्यां स्पृशन् ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा ॐ इदं विष्णुर्वि च
क्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे इति जप्त्वा वामहस्तेनान्नपात्रमत्यजन् ॐ कृष्ण कव्यमिदं रक्षस्व मदीयमिति पठित्वा
ॐ इदमन्नं ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं हविरित्यन्नजलघृतेषु पुनरन्ने च दक्षिणांगुष्ठं निवेश्य ॐ अपहताऽअसुरा रक्षांसि
वेदिषद इत्यन्नोपरि तिलान् प्रक्षिप्य मोदकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्ध इदमन्नं सोपकरणं ते
स्वधा इति पित्रेऽन्नमुत्सृजेत् एवं पितामहादिभ्यः पंचभ्योऽप्यन्नमुत्सृजेत् अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छि
द्रमस्त्विति जपेत् ततो दर्भेष्वासीनः ततो गायत्रीम् मधुवाता इत्यादि त्र्यृचं ॐ मधु मधु मध्विति च जपेत् ततः ॐ कृणुष्व पाजः प्र
सितिं न पृथ्वीं याहि राजेवामवाँ २॥ इभेन त्रिष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः तव भ्रमासऽआशुया पतन्त्य
नुस्पृश धृषता शोशुचानः तपूंष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः २ प्रति स्पशो विसृज तूर्णितमो भवा पायुर्वि
शोऽअस्याऽअदब्धः यो नो दूरेऽअघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ३ उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ २॥ ॐ षता

तिग्महेते यो नो अरातिं ठ० समिधान ॥ कैनीचातन्धस्यतसन्नमुच्छम् ४ ऊं द्रौं भव प्रतिविद्याद्यस्मदाविष्कृणुष्वदैव्यान्यग्ने अवस्थिरा त
नुहिजातुजूनास्त्रामिवजामिमृग्म्रडीहि शत्रून् अग्नेष्टातेजसासादयामि इति रक्षोघ्नीः ऋचः पठेत् ततस्तिलान् भूमौ क्षिप्त्वा ओं उदी
रतामित्यादि पितृमंत्रान् सहस्रशीर्षेत्यादि पुरुषसूक्तं ओं आशुः शिशान इत्यादिकमप्रतिरथम् अन्यानि पवित्राणि यथाशक्ति जपेत्
नमस्तुभ्यं विरूपाक्ष नमस्तेनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नमः इति पठेत् ततः ओं अद्यामुकगोत्राणां पितृपितामहप्र
पितामहानाममुकामुकशर्मणां तथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां कृतैतन्नित्यश्राद्ध
प्रतिष्ठार्थमेककार्षापणीमूल्यकं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति मोदकादिना दक्षिणां
दद्यात् ततः सर्वं कृत्वा ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिः पठेत् ओं प्रमादा
त्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा विष्णुं स्मरेत् नित्यश्राद्धीयमन्नं ब्राह्मणा
य प्रतिपादयेत् जले वा क्षिपेत् ॥ इति श्राद्धविवेके उत्तरक्रियापरिच्छेदः ॥ इति श्रीमहामहोपाध्यायश्रीरुद्रधरकृतः श्राद्धविवेकः
समाप्तः ॥ शुभं भूयात् ॥ ॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः ॥ काशीसंस्कृतमुद्रायामङ्कितोयं शिलाक्षरैः ॥१॥ श्रीका
शीजीमे ज्ञानवापीके पूर्व फाटक पर श्री विश्वनाथजी के पास महाराज शिवलाल दुवेजी के मकान मे काशीसंस्कृतमुद्रायंत्र मे छपी
जिनको लेना होय उनको इस कार्य के संपादक श्री बाबू वाराणसीप्रसादजी के पास याक चौरीगली मे भाई प्रतापसिंहजी के
दुकान पर मिलैगी ॥ ॥सम्वत् १९३४॥ ऽधिक जेष्ठ कृष्ण ५ सुक्रवार ॥ सन् १८७७ ॥ ईसवी ० तारिख १ जून ॥ श्रीरस्तु ॥

॥ ॥अथश्राद्धविवेकस्यसूचीपत्रमारम्भः॥ ॥

श्रा० वि० टी०


| पृ० | प० | पं० | | पृ० | प० | पं० | | पृ० | प० | पं० | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | मंगलाचरणं | २ | ३ | ४ | जलादिमंडलं | १ | ६ | ५ | पिंडचीरणेविधिः |
| १ | १ | ५ | श्राद्धस्वरूपभेदः | २ | ३ | ६ | हौमेलवणनिषेधः | १ | ६ | ११ | अक्षय्योदकदानेषष्ठीपदस्यमाचांवा कंथनियमः |
| १ | १ | ११ | पार्वणव्युत्पत्तिः | २ | ३ | ७ | मंत्रविकल्पः | १ | ६ | १३ | एवंदक्षिणाभ्युदयिकवाक्येनविवादः |
| १ | २ | ३ | श्राद्धारंभेद्रव्यसेकः | १ | ४ | १२ | यजुर्वेदानियमः | २ | ६ | ८ | भूस्वाम्यन्नदानदेवत्वेन |
| १ | २ | ५ | तत्रविष्णुस्मरणं | १ | ४ | १३ | आचमनंहरिस्मरणं | २ | ६ | १२ | नांदीमुखेऽक्षय्यसंकल्पः |
| १ | २ | ८ | पितृभक्तौसंकल्पः | २ | ४ | ५ | आचमनस्वरूपं | १ | ७ | २ | नित्यश्राद्धेगोत्रोच्चारणम् |
| १ | २ | १३ | सिद्धांतसंकल्पः | १ | ५ | ३ | अथैकोद्दिष्टतंत्रेसंकल्पस्वरूपं | १ | ७ | ३ | दक्षिणावश्यकत्वम् |
| २ | २ | ३ | गायत्रीजपः | १ | ५ | ४ | शस्त्रादिमरणेचतुर्दश्यामेकोद्दिष्टं कर्तव्यं | १ | ७ | ७ | अथनित्यश्राद्धविधिः |
| [illegible] | २ | ५ | जपेविशेषः | १ | ५ | ७ | अशौचातिक्रांतेविशेषतिथिः | १ | ७ | ९ | यथाशक्तिदक्षिणादेया |
| १ | ३ | २ | तत्रापिसंप्रदायभेदाः | १ | ५ | ११ | प्रेतश्राद्धेतुविशेषसंकल्पः | १ | ७ | १३ | तीर्थश्राद्धेतुविशेषविधिः |
| १ | ३ | ४ | पार्वणश्राद्धेआवाहनं | २ | ५ | ४ | प्रेतश्राद्धेमुक्तसंकल्पः | २ | ७ | २ | पितृभक्तिमतेतिलमात्रेणपिंडदानं |
| १ | ३ | ९ | वायुपुराणवाक्यंप्रमाणं | १ | ६ | १ | सपिंडीकरणेपिविवादाभावः | २ | ७ | ९ | तीर्थेपिंडदानंप्रशस्तं |
| १ | ३ | १२ | अर्घोत्सर्गः | १ | ६ | २ | पिंडचीरणेमंत्रविकल्पः | २ | ७ | ११ | तीर्थादौविशेषविधिः |

| पृ० | प० | पं० | | पृ० | प० | पं० | | पृ० | प० | पं० | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ८ | ४ | आमश्राद्धेपिंडादिकंआमान्नेनैव कर्तव्यम् | २ | १२ | ९ | श्राद्धविघ्नेएकादश्यांश्राद्धं | १ | १६ | १० | नवान्नभक्षणेश्राद्धम् |
| १ | ८ | ४ | जाबालिवाक्यंप्रमाण | १ | १३ | ६ | निरग्नीनांआवश्यकश्राद्धकालाः | २ | १६ | ८ | धनुषिश्राद्धनिषेधः |
| १ | ८ | ६ | श्राद्धविघ्नेआमश्राद्धनियमः | १ | १३ | १२ | अथअष्टकाः | २ | १६ | ११ | शुक्रदिनेपिनिषिद्धः |
| १ | ८ | १० | शूद्रेणतुअवश्यमेवकर्तव्यं | १ | १४ | १० | श्राद्धयोग्यतिथिद्वयेप्राप्तेद्वयोःश्राद्धं (कर्तव्यम् | २ | १६ | १३ | पक्षयोःश्राद्धनियमः |
| १ | ८ | १२ | अथदंपतिपूजनम् | १ | १४ | ११ | तन्नयुक्तम् | १ | १७ | ३ | श्राद्धकालः |
| १ | ८ | २ | वृषोत्सर्गविवेचनम् | २ | १४ | १ | चतुर्दश्यांश्राद्धनिषेधः | १ | १७ | ५ | श्राद्धनिषेधसमयः |
| १ | ९ | १ | अथवृषोत्सर्गकालः | २ | १४ | ६ | वायुपुराणवाक्यंप्रमाणं | १ | १७ | ६ | अथकुतपसंज्ञाः |
| १ | ९ | ४ | वृषोत्सर्गोगोयज्ञेनव्याख्यातः | २ | १४ | १० | शस्त्रहतानांएकोद्दिष्टश्राद्धनियमः | २ | १७ | १ | रात्र्यादौश्राद्धनिषेधः |
| १ | १० | ७ | वृषभाभिमंत्रणमंत्रव्याख्या | १ | १५ | १ | अथसंकल्पः | २ | १७ | ४ | अनग्नेरवश्यश्राद्धं |
| २ | ११ | ४ | अथमाणवकस्याभ्युदयिकेसंकल्पः | १ | १५ | ३ | कामविशेषेतिथिविशेषः | २ | १७ | ७ | श्राद्धेप्रशस्तदेशाःनाविद्धस्थ |
| १ | १२ | १ | अथषोडशादिश्राद्धेप्रथमादि (संकल्पः | १ | १५ | १० | मघात्रयोदश्यांश्राद्धंअवश्यं | २ | १७ | ८ | प्रशस्तब्राह्मणाः |
| २ | १२ | ६ | शूद्रेतुविशेषपक्षः | २ | १५ | १४ | गजच्छाया | २ | १७ | ११ | निषिद्धब्राह्मणाः |
| २ | १२ | ७ | त्रिपक्षाद्दौअशौचपातेविशेषः॥ | १ | १६ | ३ | गजच्छायादिदोषः | २ | १८ | ७ | श्राद्धेप्रशस्तकुशाः |

| पृ० | पृ० | पं० | | पृ० | पृ० | पं० | | पृ० | पं० | पं० | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | १८ | ८ | श्राद्धेनिषिद्धकुशाः | २ | १९ | ६ | अथश्राद्धेहविर्द्रव्याणि | १ | २४ | २ | अथपिंडविधिः |
| २ | १८ | १० | श्राद्धेनिषिद्धतिलाःप्रशस्ताश्च | २ | १९ | ११ | अथमांसानि | १ | २४ | १० | अथत्रिकाष्ठिका |
| २ | १८ | ११ | निषिद्धंजलं | १ | २० | ५ | अथमत्स्याःशाकाश्च | २ | २४ | ४ | जलादानक्रियादशमपुरुषस्य |
| २ | १८ | १३ | अर्घपात्राणि | १ | २० | ८ | अथफलानि | २ | २४ | १० | अथपिंडदानं[illegible] |
| १ | १९ | १ | निषिद्धपात्राणि | १ | २० | १२ | अथकंदाः | २ | २५ | १ | तिलांजलिःक्षेपणम् |
| १ | १९ | ३ | गंधादिपंचकं | २ | २० | १ | व्यंजनसंस्कारद्रव्याणि | २ | २५ | ११ | सपिंडानांस्नानतिलोदकं |
| १ | १९ | ४ | पुष्पाणि | २ | २० | १२ | अथश्राद्धेनिषिद्धाऽनिषिद्धानि | २ | २५ | १२ | अथदशगात्रविधिः |
| [illegible] | १९ | ६ | निषिद्धपुष्पाणि | | | | इतिश्रीप्रथमपरिच्छेदःसमाप्तः | १ | २६ | १० | क्षत्रियादीनांनवपिंडान्दत्वाविधिः |
| [illegible] | १९ | ७ | श्राद्धेधूपद्रव्याणि | २ | २१ | ५ | अथाधिकारिनिरूपणंद्वादशपुत्राः | २ | २६ | २ | अथास्थिसंचयः |
| [illegible] | १९ | ८ | निषिद्धधूपाः | २ | २१ | ११ | स्मृतिसारवाक्यंप्रमाणं | २ | २६ | ८ | अथप्रयोगः |
| २ | १९ | १० | श्राद्धेवस्त्रंदीपश्च | १ | २३ | २ | अथानधिकारिणः | २ | २८ | १ | पुत्रादीनांस्नानादि |
| १ | १९ | १३ | श्राद्धदेशेसंनिधापनीयानि | १ | २३ | ४ | अथोदकदानाद्यनर्हाः | १ | २९ | ८ | दाह्यशरीरालाभेविधिः |
| २ | १९ | १ | श्राद्धदेशेअपसारणीयानितानू ...ादीनि० | १ | २३ | ८ | अथप्रथमक्रिया | १ | २९ | १० | अस्थ्यऽलाभेपुत्तलदहनविधिः |

| पृ० | प० | पं० | |
|---|---|---|---|
| २ | २९ | ६ | पंचगव्यपानंच |
| | | | इतिप्रथमक्रियापरिच्छेदोद्वितीयः |
| २ | २९ | १० | अथएकादशाहः |
| २ | ३० | ११ | अथवृषोत्सर्गप्रयोगः |
| २ | ३४ | १२ | अथकपिलादानम् |
| २ | ३४ | १३ | अथैकादशाहश्राद्धप्रयोगः |
| १ | ३९ | ६ | अथाशौचद्वितीयदिनेयथाशक्तिदानानि० |
| १ | ३९ | १३ | अथान्नोदककुंभदानं |
| २ | ३९ | ८ | अथद्वादशाहश्राद्धम् |
| २ | ३९ | ९ | अथमासिकश्राद्धप्रयोगः |
| २ | ४१ | ६ | त्रिपक्षमपिआद्यवत् |
| २ | ४१ | १० | अथसपिंडनश्राद्धप्रयोगः |
| २ | ४९ | १ | सपिंडीकरणकालव्यवस्था |

| पृ० | प० | पं० | |
|---|---|---|---|
| २ | ४९ | ८ | श्राद्धभोजनेप्रायश्चित्तम् |
| १ | ५० | ९ | अथवीरायाःसपिंडकर्तृकषोडशश्राद्धानि० |
| | | | अथतृतीयपरिच्छेदः॥ |
| १ | ५३ | ४ | अथापानकैकोद्दिष्टश्राद्धं |
| १ | ५५ | ५ | अथवैश्वदेवबलिः |
| २ | ५५ | ३ | पितृव्यादिश्राद्धप्रयोगः |
| २ | ५५ | ४ | अथमातृश्राद्धप्रयोगः |
| २ | ५७ | १० | अथस्त्रीकर्तृकश्राद्धप्रयोगः |
| १ | ५९ | १० | अथाशूद्रकर्तृकश्राद्धप्रयोगः |
| १ | ५९ | १० | अथपार्विकपार्वणश्राद्धप्रयोगः |
| १ | ६३ | २ | वैश्वदेवबलिप्रकारः |
| १ | ६३ | १२ | तीर्थश्राद्धम् |
| १ | ६३ | १३ | अथाभ्युदयिकश्राद्धं |

| पृ० | प० | पं० | |
|---|---|---|---|
| १ | ६४ | ७ | अथाभ्युदयिकश्राद्धप्रयोगः |
| १ | ६८ | ६ | अथनित्यश्राद्धप्रयोगः ॥ |


इतिश्राद्धविवेकस्यसूचीपत्रं
समाप्तम् सम्पूर्णमस्तुशुभं

॥ इति श्राद्धविवेकः समाप्तः ॥